THE

# MINOR POEMS

OF

## Nilakantha Dikshita.

Price Re. 1.

## SAHASRANAMA SERIES

Stotras and Archana alone: Very useful for parayanam
Demy 16mo.

| | | | |
|---|---|---|---|
| ललितासहस्रनामस्तोत्रम् LALITA SAHASRANAMA | | 0 | 8 |
| लक्ष्मीसहस्रनाम ,, LAKSHMI WITH ASHTOTTARA | | 0 | 8 |
| वेदसारशिवसहस्रनाम ,, VEDASARASIVA | Do | 0 | 6 |
| सुब्रह्मण्यसहस्रनाम ,, SUBRAHMANYA | Do | 0 | 6 |
| विष्णुसहस्रनाम " VISHNU | Do | 0 | 6 |
| हनुमत्सहस्रनाम ,, HANUMAT | Do [Under reprint | | |

## TRISATI SERIES

| | | |
|---|---|---|
| ललिता त्रिशती LALITA TRISATI Stotram & Namavali | 0 | 4 |
| रुद्रत्रिशती RUDRA TRISATI | 0 | 2 |

## ASHTOTTARA SERIES

| | | |
|---|---|---|
| शंकराष्टोत्तर शतनामस्तोत्रम् SANKARA ASHTOTTARA | 0 | 2 |
| देवी अष्टोत्तर ,, DEVI ASHTOTTARA | 0 | 2 |
| ललिताष्टोत्तर ,, LALITA ASHTOTTARA | 0 | 2 |
| गुरुत्रयाष्टोत्तर ,, GURUTRAYASHTOTTARASATA-NAMA STOTRAS | 0 | 4 |
| कृष्णपञ्चाष्टोत्तर ,, KRISHNASHTOTTARAMS containing five Ashtottarams | 0 | 4 |

भक्तिसुधातरङ्गिणी BAKTISUDHATARANGINI or The Works of Sri Sachchidananda Sivabhinava Nrisimha Bharati Swami, the late Mahaswamigal of Sringeri.

With several half-tone illustrations. Edition De Luxe 10 0
Do. Ordinary Edition 2 4

स्तोत्राणि STOTRAS composed by His Holiness Sri Chandrasekhara Bharati Swamigal, Jagadguru of Sringeri 0 8

॥ श्रीः ।

# ॥ लघुकाव्यानि ॥

# MINOR POEMS

श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य

चतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजि

श्रीमदप्पय्यदीक्षितपौत्रेण शिवलीलार्णवा-

द्यनेकप्रबन्धप्रणेत्रा महाकवि

श्रीनीलकण्ठदीक्षितेन

विरचितानि ।

श्रीरङ्गम्

श्रीवाणीविलासमुद्रायन्त्रालयः ।

१९५४.

[मूल्यम् रूप्यकं-१ ]    [पोस्टेज् पृथक्

॥ श्रीः ॥

# ॥ विषयसूची ॥

—⊛—

॥ श्रीः ॥

# ॥ आनन्दसागरस्तवः ॥

विज्ञापनार्हविरलावसरानवाप्त्या
मन्दोद्यमे मयि दवीयसि विश्वमातुः ।
अव्याजभूतकरुणापवनापविद्धा-
न्यन्तः स्मराम्यहमपाङ्गतरङ्गितानि ॥ १

आवेद्यतामविदितं किमथाप्यनुक्तं
वक्तव्यमान्तररुजोपशमाय नालम् ।
इत्यर्थ्यसे किमपि तच्छ्रवणे निधातुं
मातः प्रसीद मलयध्वजपाण्ड्यकन्ये ॥ २ ॥

आक्रन्दितं रुदितमाहतमानने वा
कस्यार्द्रमस्तु हृदयं किमतः फलं वा ।
यस्या मनो द्रवति या जगतां स्वतन्त्रा
तस्यास्तवाम्ब पुरतः कथयामि खेदम् । ३ ॥

पर्याकुले मनसि वाचि परिस्खलन्त्या-
मावर्तगर्त इव चक्षुषि घूर्णमाने ।
कस्तेऽभिधास्यति शिवे मम तामवस्थां
काले दयस्व कथयामि तवाधुनैव ॥ ४ ॥

भक्तिं करोतु नितरां सुरजातिमात्रे
ग्रामीणजन्तुरिव पौरजनेषु लोकः ।
अन्यत्र देवि भवदीयपदारविन्दा-
दाकृष्यमाणमपि मे हृदयं न याति ॥ ५ ॥

अङ्गीकुरु त्वमवधीरय वा वयं तु
दासास्तवेति वचसैव जयेम लोकान् ।
एतावतैव सुकरो ननु विश्वमात-
रुद्दण्डदण्डधरकिंकरमौलिभङ्गः ॥ ६ ॥

वेदान्तवाक्यजनितं विमलं विचारै-
रासाद्य बोधमनुचिन्तनतोऽपरोक्षम् ।
मुक्तिं व्रजन्ति मनुजा इति सूक्तिमाद्या-
मालम्ब्य कस्तरितुमर्हति शैलकन्ये ॥ ७ ॥

एकैकवेदविषयाः कति नाम शाखा-
स्तासां शिरांसि कति नाम पृथग्विधानि ।
अर्थावबोधविधुरोऽक्षरलाभ एव
केषां नृणां कतिभिरस्तु शरीरबन्धैः ॥ ८ ॥

न्यायाः परस्परविभिन्नदिशः सहस्र-
मुच्चावचानि च भवन्त्युपबृंहणानि ।
एवं स्थिते गिरिसुते निगमोपलानां
तात्पर्यसारमवधारयितुं क्षमः कः ॥ ९ ॥

अस्त्वक्षरग्रहविधिर्जनुषां सहस्रै-
रापाततो भवतु वापि ततोऽर्थबोधः ।
दुर्वादिकल्पितविकल्पतरङ्गसान्द्रा-
न्दुष्पूर्वपक्षजलधीन्कथमुत्तरेयुः ॥ १० ॥

ब्रह्मेति शक्तिरिति बन्धविमोचनीति
मायामयीति मदनान्तकवल्लभेति ।
सप्ताष्टशब्दपरिवर्तनमात्र एव
सामर्थ्यमावहति शास्त्रपरिश्रमोऽयम् ॥ ११ ॥

तस्मै प्रसीदसि गिरीन्द्रसुते य इत्थं
संपादयेत शनकैरपरोक्षबोधम् ।
यस्मै प्रसीदसि स च क्षमतेऽवबोद्धु-
मित्थं परस्परसमाश्रयमेतदास्ते ॥ १२ ॥

आकर्णय त्वमिममभ्युपगम्य वादं
जानातु कोऽपि यदि वा हृदयं श्रुतीनाम् ।
तस्याप्यसंख्यभवबन्धशतार्जितोऽयं
द्वैतभ्रमो गलतु जन्मशतैः कियद्भिः ॥ १३ ॥

काले महत्यनवधावपतन्कदापि
काप्यन्तिमे जनुषि कोऽपि गतिं लभेत ।
इत्थं समर्थनविधिः परमागमानां
पर्यायसूक्तिविधया नयनं नवर्थे ॥ १४ ॥

एकापवर्गसमये जगतोऽपवर्गः
सर्वापवर्गसमये पुनरस्तशङ्कः ।
ईदृग्विधं कमपि पक्षमिहावलम्ब्य
स्थातुं सुखं क्षममनेन पथा प्रवृत्तैः ॥ १५ ॥

अभ्यस्य वेदमवधाय च पूर्वतन्त्र-
मालक्ष्य शिष्टचरितानि पृथग्विधानि ।
अध्यापनादिभिरवाप्य धनं च भूरि
कर्माणि मातरलसाः कथमाचरेयुः ॥ १६ ॥

आयस्य तावदपि कर्म करोतु कश्चि-
त्तेनापि मातरधिकं किमिहानुभाव्यम् ।
आस्ते सुखं य इह भारतवर्षसीम-
न्यास्ते स किंचिदित उत्तरतोऽपसृत्य ॥ १७ ॥

कर्म त्यजेम यदि नूनमधः पतेम
यद्याचरेम न कदापि भवं तरेम ।
कर्म त्यजेदिति चरेदिति च प्रवृत्ता
भावेन केन निगमा इति न प्रतीमः ॥ १८ ॥

कर्मण्यकर्मविधिरेष यदाचरन्ति
कर्माणि तत्तदनुबन्धजिहासयेति ।
सत्यं तथाप्यभिनवो भविता न बन्धः
प्राचीनबन्धहरणे क इवाभ्युपायः ॥ १९ ॥

प्रारब्धकर्म कियदारभते कियद्वा
प्रारप्स्यते कियदिदं क इवावधत्ताम् ।
कालः कियानिव मया प्रतिपालनीयो
यस्य क्षणार्धमपि कल्पशतत्वमेति ॥ २० ॥

पुंसः क्षणार्धमपि संसरणाश्रमस्य
सांख्यादयः सरणयो न विशन्ति कर्णम् ।
संख्याय गाङ्गसिकताः सकलाश्च सूक्ष्मा
भुङ्क्ष्वेति वागिव महाक्षुधयार्दितस्य ॥ २१ ॥

भक्तिस्तु का यदि भवेद्रतिभावभेद-
स्तत्केवलान्वयितया विफलैव भक्तिः ।
प्रीतिस्त्वयि त्रिजगदात्मनि कस्य नास्ति
स्वात्मद्रुहो न खलु सन्ति जनास्त्रिलोक्याम् ॥ २२ ॥

आत्मा समस्तजगतां भवतीति सम्य-
ग्विज्ञाय यद्वितनुते त्वयि भावबन्धम् ।
सा भक्तिरित्यभिमतं यदि सिद्धमिष्टं
व्यर्थं विशेष्यमलमस्तु विशेषणं नः ॥ २३ ॥

स्वात्मेतरत्वमवधार्य परत्वबुद्ध्या
यत्प्रीयते गुरुजनेष्विव सैव भक्तिः ।
स्यादेतदेवमियमेव तु मे जिहास्या
द्वैतभ्रमात्किमधिकं भवबन्धमूलम् ॥ २४ ॥

सेवैव भक्तिरिति कर्मपथप्रवेशः
सेव्यप्रसादफलका किल कर्मसेवा ।
ध्यानप्रवाह इति चेच्छ्रवणात्तृतीयः
प्रागेव मातरयमाकलितोऽभ्युपायः ॥ २५ ॥

अत्रैव दास्यसि विमुक्तिमथापि याचे
मातः शरीरपतनं मणिकर्णिकायाम् ।
अस्तु स्वकृत्यमनुकम्पनमीश्वराणां
दासस्य कर्मकरतैव तथा स्वकृत्यम् ॥ २६ ॥

सद्यो भवेत्सुकृतिनामुपदेशलाभः
पापात्मनां बहुतिथे समये व्यतीते ।
इत्यादिभिः किल पुराणवचोभिरम्ब
वाराणसीमपि न याचितुमुत्सुकोऽस्मि ॥ २७ ॥

आक्रान्तमन्तररिभिर्मदमत्सराद्यै-
र्गात्रं वलीपलितरोगशतानुविद्धम् ।
दारैः सुतैश्च गृहमावृतमुत्तमर्णै-
र्मातः कथं भवतु मे मनसः प्रसादः ॥ २८ ॥

धन्याः कति त्रिभुवने परमोपभोग्यं
संसारमेव परमेश्वरि भावयन्तः ।
आभासरूपमवबोधमिमं समेत्य
क्लिश्ये कियत्कियदहं त्वमुना भवेन ॥ २९ ॥

का संसृतिः किमपचारनिबन्धनेयं
कीदृग्विधस्य तव किं क्षतमेतयेति ।
अम्ब तु नास्मि कुशलः प्रतिवक्तुमेव
खेदस्तु मे जननि कोऽप्ययमेवमास्ते ॥ ३० ॥

एवं गतस्य मम सांप्रतमेतदर्ह-
मत्रेदमौपयिकमित्थमिदं च साध्यम् ।
अस्मिन्प्रमाणमिदमित्यपि बोद्धुमम्ब
शक्तिर्न मे भुवनसाक्षिणि किं करोमि ॥ ३१ ॥

न ज्ञायते मम हितं नितरामुपायो
दीनोऽस्मि देवि समयाकरणाक्षमोऽस्मि ।
तत्त्वामनन्यशरणः शरणं प्रपद्ये
मीनाक्षि विश्वजननीं जननीं ममैव ॥ ३२ ॥

किंचिन्मया श्रुतिषु किंचिदिवागमेषु
शास्त्रेषु किंचिदुपदेशपथेषु किंचित् ।
आघ्रातमस्ति यदतो भवतीं वरीतुं
गोप्त्रीति काचिदुदपद्यत बुद्धिरेषा ॥ ३३ ॥

अद्यैवमेवमहमेष तदाप्त्युपाय
इत्यागमार्थविधुराः प्रथमे दयार्हाः ।
त्वद्रक्षकत्वगुणमात्रविदो द्वितीया
इत्यर्थये सदधिकारनिरूपणाय ॥ ३४ ॥

मातः करोषि ममतां मयि यावदीष-
त्तावद्यते मम ततः किमिवास्ति साध्यम् ।
मामित्थमित्थमुपयुङ्क्ष्व न विस्मरेति
किं स्वामिनं त्वरयते क्वचन स्वभृत्यः ॥ ३५ ॥

त्याज्यं त्यजानि विहितं च समाचराणि
नित्येषु शक्तिमनुरुध्य हि वर्तितव्यम् ।
तद्बुद्धिशक्तिमनुरुध्य न कार्यशक्ति-
मित्येतदेव तु शिवे विनिवेदयामि ॥ ३६ ॥

आत्मैव भार इति तं त्वयि यो निधत्ते
सोऽङ्गानि कानि कलयत्वलसः प्रपत्तेः ।
विश्वत्र सात्र सविलक्षणलक्षणाया
विस्रम्भसंपदियमेव समस्तमङ्गि ॥ ३७ ॥

त्वत्प्रेरणेन मिषतः श्वसतोऽपि मातः
प्रामादिकेऽपि सति कर्मणि मे न दोषः ।
मात्रैव दत्तमशनं ग्रसतः सुतस्य
को नाम वक्ष्यति शिशोरतिभुक्तिदोषम् ॥ ३८ ॥

मुक्तिं सिसाधयिषतां निजयैव बुद्ध्या
प्रारब्धकर्म भवतु प्रतिबन्धहेतुः ।
त्वामेव साधनतयापि समाश्रितानां
तुल्यं तदम्ब यदि कस्तव वीरवादः ॥ ३९ ॥

प्रारब्धकर्म गिरिजे भवदाश्रिताना-
मन्यत्र संक्रमय नाशय वा समूलम् ।
मर्त्याश्च खल्वपि विषं वपुषि प्रसक्तं
संक्रामयन्ति परतोऽपि च नाशयन्ति ॥ ४० ॥

त्वद्दर्शनश्रवणवन्दनचिन्तनादि-
ष्वक्षाणि देवि विनियुज्य यथाधिकारम् ।
रक्षेत्यसंख्यभवसंभृतयैव मैत्र्या
रुन्ध्यां यदि स्थिरममून्यधुनैव न स्युः ॥ ४१ ॥

त्रातव्य एष इति चेत्करुणा मयि स्या-
त्त्रायस्व किं सुकृतदुष्कृतचिन्तया मे ।
कर्तुं जगत्तिरयितुं च विश्रृङ्खलायाः
कर्मानुरोध इति कं प्रति वञ्चनेयम् ॥ ४२ ॥

त्वय्यर्पितं प्रथममप्पययज्वनैव
स्वात्मार्पणं विदधता स्वकुलं समस्तम् ।
का त्वं महेशि कुलदासमुपेक्षितुं मां
को वानुपासितुमहं कुलदेवतां त्वाम् ॥ ४३ ॥

मौढ्यादहं शरणयामि सुरान्तरं चे-
त्किं तावता स्वमपि तस्य भवामि मातः ।
अज्ञानतः परगृहं प्रविशन्परस्य
स्वत्वं प्रयास्यति पशुः किमु राजकीयः ॥ ४४ ॥

आधाय मूर्धनि वृथैव भरं महान्तं
मूर्खा निमज्जथ कथं भवसागरेऽस्मिन् ।
विन्यस्य भारमखिलं पदयोर्जनन्या
विस्रब्धमुत्तरत पल्वलतुल्यमेनम् ॥ ४५ ॥

क्वेदं पतिष्यति वपुः क्व ततो नु गम्यं
को दण्डयिष्यति कियन्तमनेहसं वा ।
किं तस्य संतरणसाधनमित्यनन्ता
चिन्ता स्थिता त्वयि शनैरवतारिता सा ॥ ४६ ॥

ज्ञानं दिशेयमुत तेन विनोद्धरेयं
प्रारब्धमप्यपलपेयमुतानुरुन्ध्याम् ।
इत्थं सकृत्प्रपदनैकवशंवदाया
मातर्मयि प्रववृते महतीह चिन्ता ॥ ४७ ॥

एतज्जडाजडविवेचनमेतदेव
क्षित्यादितत्त्वपरिशोधनकौशलं च ।
ज्ञानं च शैवमिदमागमकोटिलभ्यं
मातुर्यदङ्घ्रियुगले निहितो मयात्मा ॥ ४८ ॥

षट्त्रिंशदावरणमध्यजुषि त्वदङ्घ्रौ
हालास्यनाथदयिते निहितो मयात्मा ।
भूभूतलत्रिदशवर्तिषु कः क्षमेत
तच्चक्षुषापि निभृतेन निरीक्षितुं माम् ॥ ४९ ॥

बन्धं हरिष्यसि सुखं वितरिष्यसीति
निश्चप्रचं निखिलमम्ब तदास्त एव ।
संप्रत्यहं त्वयि निधाय भरं समस्तं
यन्निर्वृणोमि किमितोऽपि ममापवर्गे ॥ ५० ॥

काश्यां निपातय वपुः श्वपचालये वा
स्वर्गं नय त्वमपवर्गमधोगतिं वा ।
अद्यैव वा कुरु दयां पुनरायतौ वा
कः संभ्रमो मम धने धनिनः प्रमाणम् ॥ ५१ ॥

नाहं सहे तव कथाश्रवणान्तरायं
नाहं सहे तव पदार्चनविच्युतिं वा ।
मोक्षं दिशैतदविरुद्धमिदं न चेत्स्या-
न्नैवास्तु मातरपवर्गमहोपसर्गः ॥ ५२ ॥

आचूडमाचरणमम्ब तवानुवार-
मन्तःस्मरन्भुवनमङ्गलमङ्गमङ्गम् ।
आनन्दसागरतरङ्गपरम्पराभि-
रान्दोलितो न गणयामि गतान्यहानि ॥ ५३ ॥

पाषाणतोऽपि कठिने शिरसि श्रुतीनां
प्रायः परिभ्रमवशादिव पाटलाभम् ।
अम्ब स्मरेयममृतार्णवमाथलब्ध-
हैयंगवीनसुकुमारमिदं पदं ते ॥ ५४ ॥

ये नाम सन्ति कतिचिद्गुरवस्त्रिलोक्यां
तेषामपि स्वयमुपेतवता गुरुत्वम् ।
पादेन मूर्ध्नि विधृतेन वयं तवाम्ब
संसारसागरमिमं सुखमुत्तरामः ॥ ५५ ॥

साधारणे स्मरजये निटिलाक्षिसाध्ये
भागी शिवो भजतु नाम यशः समग्रम् ।
वामाङ्गमात्रकलिते जननि त्वदीये
का वा प्रसक्तिरिह कालजये पुरारेः ५६ ॥

स्यात्कोमलं यदि मनो मम विश्वमात-
स्तत्पादयोर्मृदलयोस्तव पादुकास्तु ।
स्यात्कर्कशं यदि करग्रहणे पुरारे-
रश्माधिरोहणविधौ भवतूपयोगः ॥ ५७ ॥

प्रस्निग्धमुग्धरुचिपादतले भवत्या
लग्नं दृढं यदिह मे हृदयारविन्दम् ।
एषैव साग्रभुवनद्विशतीपतित्व-
साम्राज्यसूचनकरी तव पद्मरेखा ॥ ५८ ॥

अप्राकृतीं मृदुलतामविचिन्त्य किंचि-
दालम्बितासि पदयोः सुदृढं मया यत् ।
तन्मे भवार्णवनिमज्जनकातरस्य
मातः क्षमस्व मधुरेश्वरि बालकृत्यम् ॥ ५९ ॥

यत्रानमन्पशुपतिः प्रणयापराधे
मन्दं किल स्पृशति चन्द्रकलाञ्चलेन ।
पुष्पार्चनेऽपि मृदितं पदयोर्युगं त-
न्मातस्तुदन्ति न कथं परुषा गिरो मे ॥ ६० ॥

अव्याजसुन्दरमनुत्तरमप्रमेय-
मप्राकृतं परममङ्गलमङ्घ्रिपद्मम् ।
संदर्शयेदपि सकृद्भवती दयार्द्रा
द्रष्टास्मि केन तदहं तु विलोचनेन ॥ ६१ ॥

दिव्या दृशोऽपि दिविषद्ग्रहणोचितानि
वस्तूनि काममवधारयितुं क्षमन्ते ।
त्वन्मात्रवेद्यविभवे तव रूपधेये
त्वद्भाव एष शरणं परिशेषितो नः ॥ ६२ ॥

अस्मिन्महत्यनवधौ किल कालचक्रे
धन्यास्तु ये कतिपये शुकयोगिमुख्याः ।
लीनास्त्वदङ्घ्रियुगले परिशुद्धसत्त्वा-
स्तानात्मनस्तव नखानवधारयामः ॥ ६३ ॥

आ शैशवान्ममतया कलितस्त्वयासा-
वानृण्यमम्ब तव लब्धुमना मृगाङ्कः ।
स्वात्मानमेव नियतं बहुधा विभज्य
त्वत्पादयोर्विनिदधे नखरापदेशात् ॥ ६४ ॥

नान्तः प्रवेशमयते किमपि श्रुतं मे
नास्तिक्यवाग्शिलया प्रतिरुध्यमानम् ।
तत्पातयाम्यहमिमां महतीमधस्ता-
त्पादोदकेन कियता परदेवतायाः ॥ ६५ ॥

संनाहिभिर्यमभटैः परिवार्यमाणे
मय्यर्भके करुणया स्वयमापतन्त्याः ।
आकर्णयेयमपि नाम विरामकाले
मातस्तवाङ्घ्रिमणिनूपुरशिञ्जितानि ॥ ६६ ॥

अब्जेशकेशवमुखैर्बहुभिः कुमारैः
पर्यायतः परिगृहीतविमुक्तदेशम् ।
उत्सङ्गमम्ब तव दास्यसि मे कदा त्वं
मातृप्रियं किल जडं सुतमामनन्ति ॥ ६७ ॥

ऊरौ शिरस्तव निवेश्य दयावितीर्ण-
संव्यानपल्लवसमीरविनीतखेदम् ।
अत्रैव जन्मनि विभोः परमोपदेश-
माकर्णयेयमपि किं मणिकर्णिकायाम् ॥ ६८ ॥

काञ्चीगुणप्रथितकाञ्चनचेलदृश्य-
चण्डातपांशुकविभापरभागशोभि ।
पर्यङ्कमण्डलपरिष्करणं पुरारे-
र्ध्यायामि ते निखिलमम्ब नितम्बबिम्बम् ॥ ६९ ॥

गर्भे निवेश्य भुवनानि चतुर्दशापि
संरक्षितुं कलितनिश्चितया भवत्या ।
प्राकारमेव रचितं परितोऽपि नून-
मूहे सुवर्णमयमेदुरपट्टबन्धम् ॥ ७० ॥

मुक्ताश्च खल्वपि यदि त्रिपुरे भवत्याः
स्तन्याशया स्तनतटं न परित्यजन्ति ।
अस्माकमुद्भटभवज्वरतापिताना-
मार्द्रीभवन्तु वदनानि कुतो न हेतोः ॥ ७१ ॥

नष्टोपलब्धमधिगत्य शिशुं चिरान्मां
वात्सल्यविद्रुतहृदः परदेवतायाः ।
क्लिद्यत्पयोधरविनिःसृतदुग्धबिन्दु-
निष्यन्दपङ्क्तिरिव दीव्यति हारयष्टिः ॥ ७२ ॥

यत्तद्धनुर्जनमनोमयमैक्षवं ते
तस्यास्तु देवि हृदयं मम मूलदेशः ।
चापाधिरोपणविधौ चरणाञ्चलेन
संभाव्यते किल समाक्रमणं कदाचित् ॥ ७३ ॥

आस्थाय दारुणतरं कमपि स्वभाव-
मत्यन्तदुष्कृतवक्रतामपि शिक्षणाय ।
गृह्णासि सायकपदे कुसुमान्यमूनि
मातः सुतेषु महती किल रूक्षतेयम् ॥ ७४ ॥

पाशं सृणिं च करयोस्तव भावयन्तः
संस्तम्भयन्ति वशयन्ति च सर्वलोकान् ।
चापं शरं च सकृदम्ब तव स्मरन्तो
भूपालतां दधति भोगपथावतीर्णाः ॥ ७५ ॥

पाशाङ्कुशौ तव करे परिचिन्त्य राग-
द्वेषौ जयन्ति परमार्थविदस्तु धन्याः ।
एकत्र चापमितरत्र शरं च मत्वा
व्यावर्तयन्ति हृदयं विषयान्धकूपात् ॥ ७६ ॥

उत्क्रान्तमान्तरमिदं करणं जनाना-
मप्येति चन्द्रमिति हि श्रुतयो वदन्ति ।
आस्तामिदं मम तु देवि मनोऽधुनैव
लीनं दृढं वदनचन्द्रमसि त्वदीये ॥ ७७ ॥

विद्यात्मनो जननि तावकदन्तपङ्क्ते-
र्वैमल्यमीदृगिति वर्णयितुं क्षमः कः ।
तत्संभवा यदमला वचसां सवित्री
तन्मूलकं कवियशोऽपि ततस्तरां यत् ॥ ७८ ॥

स्वच्छापि ते वहति यत्किल दन्तपङ्क्तिः
स्वच्छन्दनिर्दलितदाडिमबीजशोभाम् ।
तन्मे रजोव्यतिकराधिकपाटलिम्नि
चित्ते परं परिचयादिति चिन्तयामि ॥ ७९ ॥

अर्धं जितं त्रिपुरमम्ब तव स्मितं चे-
दर्धान्तरेण च तथा भवितव्यमेव ।
तच्चिन्तये जननि कारणसूक्ष्मरूप-
स्थूलात्मकत्रिपुरशान्तिकृते स्मितं ते ॥ ८० ॥

मत्क्लेशदर्शनपरिद्रवदन्तरङ्ग-
हैयङ्गवीनपरिवाहनिभं जनन्याः ।
अन्तस्तमोपहमनुस्मरतां जनानां
मन्दस्मितं तव तु मङ्गलमस्तु भूत्यै ॥ ८१ ॥

सांसिद्धिकाननसरोरुहदिव्यगन्ध-
सान्द्रीकृतेन्दुशकलाकलिताधिवासम् ।
ताम्बूलसारमखिलागमबोधसारं
मातर्विधेहि मम वक्त्रकलाचिकायाम् ॥ ८२ ॥

नासामणिस्तव शिवे चिरसंस्तवेन
प्रत्याहृते मनसि भाति तपोधनानाम् ।
अज्ञानसंततिनिशात्ययसूचनार्थ-
माविर्भवन्त्यसुरदेशिकतारकेव ॥ ८३ ॥

ताम्बूलगर्भपरिफुल्लकपोललक्ष्य-
ताटङ्कमौक्तिकमणिप्रतिबिम्बदम्भात् ।
अस्तद्वयव्यतिकरामलसत्त्वमाद्यं
वर्णं बिभर्ति जठरे तव वक्त्रबिम्बम् ॥ ८४ ॥

दत्ते श्रियं बहुविधां कुशलानि दत्ते
दत्ते पदं सुरपतेरपि लीलयैव ।
ईदृग्विधाम्ब तव दृष्टिरितोऽधिका वा
नाद्यापि कर्णमतिवर्तितुमीश्वरीयम् ॥ ८५ ॥

पाषाणकूटकठिने जनदुर्विगाहे
व्यर्थं महत्युपनिषद्विपिने प्रवृत्ता ।
सेव्येत केन तव लोचनचन्द्रिकेय-
मेनां निपातय सकृन्मयि तप्यमाने ॥ ८६ ॥

कामं शिवेन शमितं पुनरुज्जगार
दृष्टिस्तवेति किमियं जननि स्तुतिस्ते ।
लीलाप्रसूतपुरुषार्थचतुष्टयाया-
स्तस्याः परं तु स भवत्यवयुत्यवादः ॥ ८७ ॥

सोमो जगज्जनयितेति यदाह वेदो
नेदं लतापरमिति भ्रमितव्यमार्यैः ।
यः शैववामतनुवर्तिभवद्दृगात्मा
चन्द्रो जगत्सृजति तत्पर एष वादः ॥ ८८ ॥

सूच्यग्रवद्वसुमतीमणुवच्च मेरुं
दृष्टिर्यदम्ब तव पश्यति दानशौण्डा ।
दृष्टास्त्वया वयमपीह ततः स्मरामो
वेशन्तमेव भवसागरमुत्तरङ्गम् ॥ ८९ ॥

वाणीनिकेतनतया घनसारगौराः
कह्लारकेसररुचः कमलानुषङ्गात् ।
मातर्जयन्ति शरणागतलोकचेतो-
मालिन्यमार्जनवशादसिताः कटाक्षाः ॥ ९० ॥

आकर्णमुल्लसति मातरपाङ्गदेशे
कालाञ्जनेन घटिता तव भाति रेखा ।
शैवालपङ्क्तिरिव संततनिर्जिहान-
कारुण्यपूरपदवीकलितानुबन्धा ॥ ९१ ॥

विश्वं सृजत्यवति हन्ति च यत्कटाक्षो
विश्वस्यतां कथमसौ चपलस्वभावः ।
एषोऽपि यामनुसरँल्लभते यशांसि
तामेव विश्वसिमि देवि तवानुकम्पाम् ॥ ९२ ॥

अर्धं कलङ्करहिता करुणैव शंभो-
रर्धं गुणास्तदितरे सकलाः समेताः ।
इत्यम्ब संप्रति किल स्फुरितं रहस्यं
संपश्यतो मम भवन्मयमैशमर्धम् ॥ ९३ ॥

अम्ब भ्रुवोस्तव विचेष्टितमप्रमत्तं
संपश्यतां निजनिजार्थनिदेशहेतोः ।
तन्मूलदेशनिहिता निभृता सुराणां
दृष्टिः प्रयाति मृगनाभिविशेषकत्वम् ॥ ९४ ॥

सारं कणं कणमघर्मरुचां सहस्रा-
त्संगृह्य निर्मितमिदं तव वक्त्रबिम्बम् ।
तावत्सुधाकरकलङ्ककुलानि पश्चा-
दन्यत्र देवि निहितानि कचापदेशात् ॥ ९५ ॥

विन्यस्तमिन्द्रमणिकंदलसुन्दरेषु
केशेषु ते स्फटिकनिर्मलमिन्दुखण्डम् ।
आद्य रसंगतिवशादसितायमान-
मिन्दीवरच्छदवतंसदशां बिभर्ति ॥ ९६ ॥

चिन्तामणिस्त्रिभुवनेश्वरि कौस्तुभश्च
ख्यातौ मणी तव गृहाङ्गणकुट्टिमस्थौ ।
किं रत्नमन्यदुपलभ्य किरीटकोटिं
वाचस्पतिप्रभृतयस्तव वर्णयन्तु ॥ ९७ ॥

प्रादुर्भवत्तरणिबिम्बशतारुणानि
पर्याप्तशीतकिरणायुतशीतलानि ।
शृङ्गारसारपरिवाहमयानि मात-
रङ्गानि केऽपि चरमे जनुषि स्मरन्ति ॥ ९८ ॥

प्रत्यग्रकुङ्कुमरसाकलिताङ्गरागं
प्रत्यङ्गदत्तमणिभूषणजालरम्यम् ।
ताम्बूलपूरितमुखं तरुणेन्दुचूडं
सर्वारुणं किमपि वस्तु ममाविरस्तु ॥ ९९ ॥

अर्धं स्त्रियस्त्रिभुवने सचराचरेऽस्मि-
न्नर्धं पुमांस इति दर्शयितुं भवत्या ।
स्त्रीपुंसलक्षणमिदं वपुराहृतं य-
त्तेनासि देवि विदिता त्रिजगच्छरीरा ॥ १००॥

निर्मासि संहरसि निर्वहसि त्रिलोकीं
वृत्तान्तमेतमपि वेत्ति न वा महेशः ।
तस्येश्वरस्य गिरिजे तव साहचर्या-
ज्जातः श्रुतिष्वपि जगज्जनकत्ववादः ॥ १०१ ॥

सत्तामयखण्डसुखसंविदसि त्रिलोकी-
सर्गस्थितिप्रतिहतिष्वपि निर्व्यपेक्षा ।
त्वामन्तरेण शिव इत्यवशिष्यते कि-
मर्धं शिवस्य भवतीत्यनभिज्ञवादः ॥ १०२ ॥

नास्मिन्रविस्तपति नात्र विभाति वातो
नास्य प्रवृत्तिमपि वेद जगत्समस्तम् ।
अन्तःपुरं तदिदमीदृशमन्तकारे-
रस्मादृशास्तु सुखमत्र चरन्ति बालाः ॥ १०३ ॥

त्वत्संनिधानरहितो मम मास्तु देश-
स्त्वत्तत्त्वबोधरहिता मम मास्तु विद्या ।
त्वत्पादभक्तिरहितो मम मास्तु वंश-
स्त्वच्चिन्तया विरहितं मम मास्तु चायुः ॥१०४॥

त्वं देवि यादृगसि तादृगसि त्वमीदृ-
गेषेति वक्तुमिव बोद्धुमपि क्षमः कः ।
मामेव तावदविदन्नतिपामरोऽहं
मातः स्तुतिं त्वयि समर्पयितुं विलज्जे ॥१०५॥

काचित्कृता कृतिरिति त्वयि सार्पितेति
कापि प्रमोदकणिका न ममान्तरङ्गे ।
मौढ्यं मदीयमिह यद्विदितं ममैव
किं त्वम्ब विश्वसिमि दीनशरण्यतां ते ॥१०६॥

कालानपास्य विषुवायनसंक्रमादी-
नस्तंगते हिमकरे च दिवाकरे च ।
अम्ब स्मरेयमपि ते चरणारविन्द-
मानन्दलक्षणमपास्तसमस्तभेदम् ॥ १०७ ॥

चतुरध्यायीरूपं कलहंसव्यञ्जनं जगन्मातुः ।
अपरब्रह्ममयं वपुरन्तः शशिखण्डमण्डनमुपासे ॥ १०८

इति श्रीनीलकण्ठदीक्षितविरचितः
आनन्दसागरस्तवः संपूर्णः ॥

॥ श्रीः ॥

# ॥ शिवोत्कर्षमञ्जरी ॥

या लक्ष्मीस्त्रिजगच्छरण्यचरणा तस्याः पतिर्यच्छरो
यद्देयं निखिलैर्वदान्यनिवहैस्तस्य जीर्णं धनुः ।
या संविच्छ्रुतिषु स्मृता रहसि सा यत्पादसंसेविनी
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

अर्चामीति धिया यदेव कुसुमं क्षिप्त्वा जनो मुच्यते
विध्यामीति धिया तदेव विकिरन्भस्मीकृतो मन्मथः ।
इत्याभ्यन्तरवृत्तिमात्ररसिको बाह्यानपेक्षश्च यः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ २ ॥

यत्केशाग्रविलग्नमम्बु जगतां तीर्थं परं पावनं
यद्वीर्यं भुवि दाक्षिणेति विदितं यज्ञेषु सर्वेष्वपि ।
श्वानो यस्य तपस्विनां च जगतां कामप्रदा धेनवः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ३ ॥

वक्त्राब्जेषु पितामहस्य जगतां वक्षःस्थले श्रीपतेः
सर्वाङ्गेषु शतक्रतोरपि दृढानुच्छिद्य जैत्रध्वजान् ।
संप्राप्तो मदनोऽपि यस्य निटिलज्योतिःपतंगायितः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ४ ॥

यद्दातुं कृतलोभ एव परमं धाम स्वभक्तान्पुरा
काकुत्स्थोऽप्यतिसंदधे सभुवनान्यन्यानि सृष्ट्वा तदा ।
आवेधोमशकं तदेव तृणवद्दत्तेऽविमुक्ते तु यः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ५ ॥

सेतुं यत्र निबध्य यत्र वसुधामुद्धृत्य मग्नां पुरा
विख्यातो मधुसूदनः स जलधिर्यत्स्रोतसा पूरितः ।
सा जाह्नव्यपि यज्जटातनुशिखालम्बाम्बुलेशायिता
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ६ ॥

दातव्यस्त्रिदिवः प्रतिक्षणपरिक्षीणः समस्तैः सुरै-
स्तद्दानाय च ते कियत्कियदिति व्यापारयन्ते जनान् ।
अक्षय्यं पदमप्यमुत्र च सकृद्यत्कीर्तनं साधये-
त्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ७ ॥

मन्त्रे वा क्वचिदर्थवादशकले दिष्ट्या गृहीते सकृ-
त्स्वे नाम्नि त्रिदशा वहन्ति महतीं कीर्तिं यदीयोक्तिषु ।
श्वानस्ते निगमा यदीयभवनद्वारे चरन्ति स्वतः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यः सांतानिकलोकद्[1]स्तनुभृतां कोदण्डदीक्षागुरुः
सोऽप्याहूयत मर्त्यमात्रभजनात्कालेन काले न किम् ।
तादृशोऽपि स कस्यचिद्द्विजवटोस्त्राणाय येनाहृतः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥ ९ ॥

कस्मैचिद्द्विजबन्धवे कियदपि क्षीरं पुरा [2]याचते
दत्तो येन दयारसैकवपुषा दुग्धोद एवार्णवः ।
श्रीश्रीवल्लभकल्पपादपसुधाचिन्तामणीभिः समं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

केनास्मानतिशेरते दिविचराः श्रुत्या गृहीता हि ते
किं नास्मान्श्रुतिराह [3]तान्परतया ब्रूते किमस्मान्स्वकान् ।
सर्वे चेत्पशवो वयं किमितरैः सर्वस्य यो मोचकः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. त्रिजगतां 2. नाथते 3. तानपरधा

बाणो यस्य न बाणक्रमं सहते चक्रे [1]तु ये द्वे तयो-
रेकं चक्रकुलप्रतीपमितरच्चक्रानुकूलक्रियम् ।
ज्या तु ज्यां शिरसा बिभर्ति भुवने [2]सूतो न सूतः क्वचि-
त्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

क्रत्वात्मा पुरुषः क्रतुः क्रतुभुजो वक्ता क्रतूनां क्रतो-
राधारः क्रतुकालकल्पनपरौ सर्वेऽप्यमी संहृताः ।
यस्यातिक्रमतः सह क्रतुकृता भ्रष्टाश्च नष्टाः क्षणा-
त्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

आरोढुं वरमौपवाह्यमपहर्तुं सुन्दरीः कन्यका
भोक्तुं भोगमुपस्थितं सुखमलंकर्तुं च रत्नैस्तनुम् ।
संनह्यन्त्यमृतान्धसो हि शमिते येनैव हालाहले
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

स्वं वासो दशधा विभज्य वितरन्नेकैकखण्डं पुरा
यश्चक्रे दश पाकशासनहुताशादीन्दिशामीश्वरान् ।
यद्भिक्षाशनभाक्सदा त्रिजगतामन्नप्रदात्री शिवा
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. च यस्यैतयो॰ 2. भूतो

स्वच्छन्दं चरतो हि यस्य चरणाङ्गुष्ठाग्रसंपादिता
रेखा दीव्यति दैतिराजपदवीं प्राप्ता जगद्विश्रुता ।
लब्धा दैत्यभिदा तपोभिरुपदीकृत्य [1]स्वकं लोचनं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

बाणं काञ्चन बाणकोणमितरा बाणस्य मूलं परा
यन्तारं कतिचिद्रथाङ्गमितराः शिष्टाः पुनः स्वामिनम् ।
इत्थं संस्तुवते चिरंतनगिरः साक्षात्प्रणम्यापि यं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

प्राचीनेत्यधुनातनीति भुवने वाङ्नाम या यावती
[2]तां सर्वां परितः परीत्य चरणे [3]यस्यायतीं विश्रमम् ।
शृण्वन्नङ्कदतां गतः फणिपतिः शब्दागमं व्याकरो-
त्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

गान्धर्वागमदेशिकौ तनुभृतां यत्कर्णयोः कुण्डले
यत्पादाङ्कदनिर्मितं भुवि महाभाष्यं किल स्त्यायति ।
पुण्यं पापमिति व्यवस्थितिरियं यद्वाहदेषास्वनः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. स्वमप्यायुधं 2. ताः सर्वाः 3. यस्यायतीर्विश्रमम्

ध्यात्वा वर्षगणान्बहून्विरचितं यत्नेन यद्वेधसा
यच्छौरिर्बिभरांबभूव बहुधा [1]भूत्वा च मृत्वा स्वयम् ।
तल्लोकत्रयमीषदुल्लसति यच्चक्षुःस्फुलिङ्गे हुतं
स ग्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

[2]सौम्याग्नेयतया क्षराक्षरतया शब्दार्थभावेन वा
जीवब्रह्मतया जडाजडतया स्त्रीपुंसभावेन वा ।
द्वेधा भिन्नमिदं हि यस्य वपुषः सव्यापसव्ये विदुः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यल्लाभाय पुरा कियद्भिरमरैः सिन्धौ कियद्व्यापृतं
लेभे [3]यत्परिवेषणेन कियतीं कीर्तिं रमावल्लभः ।
यच्चूडाकुसुमक्षरन्मधुरसस्रोतःकणः सा सुधा
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यः स्रष्टा जगतां यतोऽयमभवत्तद्यस्य नाभेरभू-
च्छेते यत्र स [4]तं च यश्चुलुकयांचक्रे सहान्यैः क्षणात् ।
तादृक्षाः शतशः पुराणमुनयो यच्छिष्यवर्गे स्थिताः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. मृत्वा 2. स्वामीति स्वमिति 3. यत्परिपोषणेन 4. तच्च

निर्व्यापारदशैव यस्य जगतीनिर्वाहधौरंधरी
मन्दस्मेरमुखाब्जतैव परमो यस्य [1]द्विषां निग्रहः।
नित्यं यस्य च मौनमेव निखिलं छिन्ते सतां संशयं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

दत्त्वा श्रीरिषवे सिसाधयिषवे वासो गृहीतं सुरैः
सूताय व्ययिता गिरश्च किमितो दाताऽस्म्यहं केवलः।
इत्यालोच्य दयानिधिः कलयते कैवल्यमेवार्थिनां
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

शारीरः पृथिवी रवीन्दुदहना वायुर्वियत्तोयमि-
त्यष्टाभिश्चिदचिद्गुणैः [2]परिणतं विश्वं [3]तनुस्त्वेति यः।
विश्वं विश्वविलक्षणः प्रभविता विश्वस्य विश्वाधिकः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

शब्दग्राममयी यदीयगृहिणी ख्याता यदीयं वपु-
स्त्रैलोक्यं जडचेतनाष्टकमयं यद्गुणगुप्तं जगत्।
सर्वासां दयितो गिरां सकललोकात्मा च विश्वेश्वरः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. त्विषां 2. परिवृतं 3. न तस्येति

यज्जातीयकणाङ्कितानननहिं जीर्णं कमप्यावस-
न्पार्श्वस्थापितपन्नगाशनपतिर्जागर्ति नित्यं हरिः ।
यत्कण्ठाभरणायितास्त्रिजगतीभीमः स हालाहलः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

अन्योन्यश्वसिताशनैः फणधरैराविश्य सत्त्वान्बहि-
र्भुञ्जानैः परिचारकैस्तृणगणैरानन्दिना नन्दिना ।
भिक्षान्नोपचितैश्च दारतनयैः पुष्णाति विश्वानि यः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

केयूराङ्गदहारकुण्डलकटीसूत्रोपवीतीभव-
द्भोगीन्द्रोद्भटफूत्कृतिव्यतिकरोन्मृष्टाङ्गरागो मुहुः ।
संवर्तोपचितैस्त्रिलोकभसितैर्भूयोपलिप्येत यः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

सर्वश्चेतनवर्ग एष पशुतामस्यानुमेने [1]स्वयं
तेषामेष पतिः प्रभुर्नियमने निर्मोचने च स्वतः ।
इत्याम्नायगिरः स्तुवन्ति बहुशः शाखासु [2]सर्वासु यं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. स्म यत् 2. शाखासु

यच्छूलं गतसारमित्युपददे चक्रं जिघृक्षुर्हरि-
स्तत्खण्डो निहितस्तु येन दनुजे तेनापि दुर्निग्रहः ।
निर्जेतुं लवणं प्रतीक्ष्य विरहं शक्त्याभवत्सर्वदा
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

नाम्ना मां श्रुतिरग्रहीदिति सुराः ख्यातिं लभन्ते परां
तं वेदाहमिति श्रुतिः [1]कथयतीत्युत्सिच्यते माधवः ।
ता यद्दोरिषुधन्वमन्युषु नमोवाकान्वहन्ते शतं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

सर्गश्च प्रतिसंचरश्च जगतां यत्पक्ष्मणी संश्रितौ
शास्त्राणि श्रुतयोऽपि वा यदधरस्पन्दं प्रतीक्ष्यासते ।
बन्धो मोक्ष इति द्वयं तनुभृतां यस्याक्षिकोणे स्थितं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

[2]शक्त्यर्धं विनिवेशयामि परिगृह्णीतेत्युपच्छान्दिताः
संभूयापि वयं [3]तदर्धवहने न स्मः समर्था इति ।
जग्मुः प्रागमराः शरादिविधया यस्य स्वयं शेषतां
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. कथितव 2. शक्त्यर्थं 3. तदर्थ

यानब्धौ विनिमज्ज्य मीनवपुषा शौरिश्चिरायावह-
  त्तस्योद्धारणमेव कर्म महतां माहात्म्यमुद्घुष्यते ।
यानद्यापि विधिर्बिभर्ति वदनैस्ते यं वहन्त्यागमाः
  स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

जेतुं त्रीणि पुराणि येन सहसारूढे धरित्रीरथे
  वेदाश्वेषु [1]विभुग्नजानुषु वृषो भूत्वा प्रयास्यन्हरिः ।
वोढुं [2]तं न रथं शशाक विधृतं शेषात्मनापि स्वयं
  स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

अम्बा यद्गृहमेधिनी त्रिजगतां शब्दान्तराण्यन्तरा
  संत्यज्योपपदं वदन्ति च जना एकं यमेवेश्वरम् ।
मुक्त्वा च प्रतियोगिनं वदति [3]यत्सूनुं कुमारं श्रुतिः
  स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

विश्वं मुञ्च बधान चेति हि परा शक्तिर्यदाज्ञापिता
  ज्ञानेच्छाकृतिशक्तिषु स्वयमिमं विन्यस्य सर्वंभरम् ।
आस्तेऽनुत्तरसारमस्य परमानन्दानुसंधायिनी
  स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. च भग्न 2. तेन 3. यं नूनं

उन्मीलच्चतुरग्रविंशतिशतद्वन्द्वात्मना संख्यया
निर्भक्तैर्भुवनैः सनेतृभिरभिव्याप्तं कलापञ्चकम् ।
यत्कोट्यंशपराख्यशक्तिकणिकालेशस्य लेशायितं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यस्यानन्दमहार्णवस्य कणिका या कापि विद्यानिल-
व्याधूता शतधा विभिद्य भुवनं व्याप्ता श्रुतीनां गणैः ।
ब्रह्म त्वं तदसीति वादमुखरैरद्यापि चान्विष्यते
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

श्रेयः संसरतां किमस्ति परमं नामापवर्गार्चना-
दुत्तानामधिको न कश्चन गुणोऽस्त्यस्माद्धियां गोचरः ।
तद्यद्दर्पणसंप्रसादसुलभं नालं यदीयस्तुतौ
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

नष्टे स्थावरजङ्गमे शतधृतौ नष्टे जगत्स्रष्टरि
व्याप्ते दैत्यरिपौ हरेण विहरत्यस्मिन्महेशात्मना ।
अन्तर्भावयितुं स्वयं तमपि यस्येमे गणाः साक्षिणः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

---

1. उन्मीलच्चतुरस्रविंशतिशतद्व्यर्णात्मना

नाशव्याप्यममङ्गलं तदितरं माङ्गल्यमेवं स्थिते
नश्यद्दैवतधारितैरलममलंकारैरभव्यैरिति ।
नित्यैर्भस्मभिरेव भूषयति यः स्वाङ्गं जगन्मङ्गलं
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

गङ्गाम्भःपरिशोषणं स्मरमदोच्छेदो जगद्दाह इ-
त्याद्यं निग्रहवैशसं कलयते कण्ठादुपर्येव यः ।
अन्तः संततमीहते तु शिवमाकीटं जगन्मात्रके
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

अभ्यर्चन्ति यमामनन्ति यमनुध्यायन्ति यं संततं
गीर्वाणाः फणिनो नरा इति किमत्याश्चर्यमाचक्ष्महे ।
यो देवः स्वयमित्यसौ शिवमनुध्यायाञ्छिवत्वं गतः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यास्वप्सु द्रुहिणोऽजनिष्ट धरणौ यत्रावतारो हरे-
र्लिल्ये यत्र हुताशने त्रिजगतां माता विदेहात्मजा ।
तद्भूतत्रयमप्यभूदचतुरं यत्तेजसो धारणे
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यद्धर्मानुचिकीर्षया प्रववृते भिक्षाश्रमोऽनुत्तमो
यद्दास्यव्रतलाञ्छनं परमिति ख्याता विभूतिः श्रुतौ ।
यत्सूक्तिश्रवणेच्छया सुकृतिनो मुञ्चन्ति काश्यामसू-
न्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

यत्सारथ्यपदश्रुतेः शतधृतेरायुः परार्धाधिकं
शौरेर्यं प्रति मार्गणत्वमयतो जागर्ति लक्ष्मीः स्थिरा ।
यत्पादाश्रयिणः फणाधरपतेर्वाचः प्रथन्ते पराः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

पारम्ये निगमागमाः परमसौलभ्ये पिशाचादयो
वाञ्छाधीनपदार्पणे स भगवान्वैयाघ्रपादो मुनिः ।
सर्वागःसहनेऽन्धकश्च दनुजो यस्य स्थिताः साक्षिणः
स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

साराः शब्दकुलस्य येन निगमा वाहा इति स्वीकृताः
सारावद्रिषु कार्मुकं गृहमिति द्वौ हेमरूप्यौ हृतौ ।
सारो वारिषु जाह्नवीति विधृता भक्तानुकम्पाच्छला-
त्स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥

भूमिर्भ्राम्यति बुद्ध एव मरुतः प्रत्यग्भ्रमोऽस्त्यद्भुतो
भ्राम्यन्त्येव सहाश्रयेण यदि वा ज्योतींषि सर्वाण्यपि ।
आवर्तोऽयमपां भ्रमः परिचिता मूर्तिर्हरस्याष्टमी
या साऽस्त्यप्पयदीक्षितो जयति सा मूर्तिर्निरस्तभ्रमा ॥

इति श्रीनीलकण्ठदीक्षितविरचिता

शिवोत्कर्षमञ्जरी संपूर्णा ॥

॥ श्रीः ॥

# ॥ वैराग्यशतकम् ॥

---

आस्ते कश्चन भिक्षुः संगृह्णन्नव्ययानि दश ।
न ममेत्यव्यययुगलं याचामस्तं किमस्त्यन्यत् ॥ १ ॥

धीसचिवं धैर्यबलं संकल्पविरोधि शान्तिधनम् ।
विश्वत्रयविषयमिदं वैराग्यं नाम साम्राज्यम् ॥ २ ॥

राज्ञो बिभ्यति लोका राजानः पुनरितोऽपि वैरिभ्यः ।
आ ब्रह्मणः कृतान्तादकुतोभयमस्पृहाराज्यम् ॥ ३ ॥

भिक्षाप्रदा जनन्यः पितरो गुरवः कुमारकाः शिष्याः ।
एकान्तरमणहेतुः शान्तिर्दयिता विरक्तस्य ॥ ४ ॥

किमपि न ये चेष्टन्ते कार्यप्रतिकार्ययोर्विरहात् ।
सन्तस्त एव मुक्ताः संदेहे गौतमः साक्षी ॥ ५ ॥

पततु नभः स्फुटतु मही चलन्तु गिरयो मिलन्तु वारिधयः
अधरोत्तरमस्तु जगत्का हानिर्वीतरागस्य ॥ ६ ॥

के चोराः के पिशुनाः के रिपवः के च दायादाः ।
जगदखिलं तस्य वशे यस्य वशे हृतमिदं चेतः ॥ ७ ॥

विषया उपतिष्ठन्तां विषयैर्वा समवयन्तु करणानि ।
आन्तरमेकं करणं शान्तं यदि का ततश्चिन्ता ॥ ८ ॥

किं विषयान्परिहर्तुं वस्तव्यं मेरुकन्दरेष्वबुधैः ।
न ह्यद्रिरनासङ्क्तुं पांसुषु रोहन्ति पद्मानि ॥ ९ ॥

अज्ञानमिह निदानं प्राग्रूपं जननमेव भवरोगे ।
परिपाकः संसरणं भैषज्यं नैष्ठिकी शान्तिः ॥ १० ॥

स्वेनैव भुक्तमर्थं सूकरजातिस्मरो मनुष्य इव ।
दूरे जुगुप्समानो धीरो वैराग्यमाद्रियते ॥ ११ ॥

शैशवमिव कौमारे तत्तरुणिम्नीव स इव वृद्धत्वे ।
न स्वदते धीराणां कामस्य विचेष्टितं शान्तौ ॥ १२ ॥

शतशः परीक्ष्य विषयान्सद्यो जहति कांचित्कचिद्धन्याः ।
काका इव वान्ताशनमन्ये तानेव सेवन्ते ॥ १३ ॥

चरमौ मातापितरौ चरमा गृहिणी सुताश्चरमाः ।
कर्तव्येऽतिप्रेमणि कथमिह धीरा विरज्यन्ते ॥ १४ ॥

तृणवद्भ्रमन्ति चपलाः स्त्रीनामानि चण्डमारुते चलिते ।
धरणिधरा इव सन्तस्तत्र न किंचित्प्रकम्पन्ते ॥ १५ ॥

कामिजनपरमभोग्ये कामसुखे धारयन्ति बीभत्साम् ।
सन्तः शमसुखरसिकाः सुधाशनाः सूकराश्च इव ॥ १६ ॥

विक्षेपमात्रभाजो विकासकाष्ठागतज्ञानाः ।
स्वस्यापि चेष्टितानि स्वयमीक्षन्ते परस्येव ॥ १७ ॥

अस्थानेऽभिनिविष्टान्मूर्खानस्थान एव संतुष्टान् ।
अनुवर्तन्ते धीराः पितर इव क्रीडतो बालान् ॥ १८ ॥

पुष्णति पुरुषे सलिलैर्मुष्णाति पुष्पं फलं च तरव इव ।
वर्तन्ते सन्तः समसुपकर्तरि चापकर्तरि च ॥ १९ ॥

नित्यानित्यविवेकः सर्वेषां घटपटत्वयोरास्ते ।
स विवेको यः शान्तिकृदविवेकोऽन्यः समस्तोऽपि ॥

अनधिगते कामसुखे कालेन यथा प्रवर्तते तरुणः ।
एवं ब्रह्मसुखेऽपि प्रवर्तते कोऽपि भाग्यवशात् ॥ २१ ॥

पुत्रगुणाः स्वातन्त्र्ये दारगुणाश्चाधिवेदनावसरे ।
भ्रातृगुणा दायविधौ द्रष्टव्या मोक्ष्यमाणेन ॥ २२ ॥

का मे गतिरिति पृच्छति चरमश्वासेऽपि यः स्वार्थम् ।
तस्य जनस्यापि कृते पापाः पापानि कुर्वन्ति ॥ २३ ॥

पितृभिः कलहायन्ते पुत्रानध्यापयन्ति पितृभक्तिम् ।
परदारानुपयन्तः पठन्ति शास्त्राणि दारेषु ॥ २४ ॥

शान्तिरलभ्यादुपरतिरपात्रभावः प्रतिग्रहनिवृत्तिः ।
क्षान्तिर्दुर्बलतेति च निवृत्तिधर्माः कलावेते ॥ २५ ॥

नीतिज्ञा नियतिज्ञा वेदज्ञा अपि भवन्ति शास्त्रज्ञाः ।
ब्रह्मज्ञा अपि लभ्याः स्वाज्ञानज्ञानिनो विरलाः ॥ २६ ॥

कलिकलुषे मनसि स्वे कथमिव जगदार्जवं लभताम् ।
चक्षुर्दोषे जाग्रति चान्द्रं द्वित्वं कुतो यातु ॥ २७ ॥

विषयाननुकूलयितुं विषयिणि हृदये विधीयतां यत्नः ।
दृशि हेयमौषधं को दृश्ये दत्त्वा कृती भवति ॥ २८ ॥

दाराः पुत्रेषु रताः पुत्राः पितृधनपरिग्रहव्यग्राः ।
रोदनशरणा जननी परलोकगतस्य को बन्धुः ॥ २९ ॥

पश्यन्ति म्रियमाणान्मरिष्यतोऽनुभिमते स्मरन्ति मृतान् ।
कथयन्ति चैत्रमसकृत्स्वेष्टन्ते नित्यवत्तु परम् ॥ ३० ॥

कलहायन्ते मूढाः कः प्रतिभूः श्वः प्रभात इति ।
तस्यामेव रजन्यां कः प्रतिभूः स्वस्य सत्तायाम् ॥ ३१ ॥

आप्रपदमाशिरस्पदमन्तः कलिमलमलीमसे वपुषि ।
विफलं गङ्गाजलमपि मद्यघटे दर्भमुष्टिरिव ॥ ३२ ॥

दण्ड्यं यत्सुखहेतोः पुष्णन्ति जनाः कथं तदेव वपुः ।
न हि शर्कराभिलाषिभिरिक्षोः काण्डानि पूज्यन्ते ॥

कुल्याः कृता विशालाः कुड्यान्युपलैर्निबद्धानि ।
क्रीता बलिनो महिषाः कृतकृत्याः स्म इति मन्यन्ते ॥

प्रायो मुह्यति चेतः प्राणभृतां प्राणनिर्गमावसरे ।
पुण्येन यदि न मुह्यति पुत्रानेव स्मरन्म्रियते ॥ ३५ ॥

शमयितुमौदरमग्निं संसारे सागरे निमज्जन्ति ।
तुहिनव्यथानिवृत्त्यै न हि वेश्मनि पावको देयः ॥

अर्थानामधिकानां राज्ञा चोरेण वा ध्रुवो नाशः ।
अन्ने खल्वतिभुक्ते वमनं वा स्याद्विरेको वा ॥ ३७ ॥

आहृत्य परित्यक्ता जनयन्त्यर्थाः सुखाभासम् ।
अत्यन्तपरित्यक्ताः परमानन्दाय कल्पन्ते ॥ ३८ ॥

प्रणमति परिसान्त्वयति प्रलपति याचति परिभ्रमति ।
आविष्ट इव पिशाच्या पुरुषस्तृष्णावशं यातः ॥ ३९ ॥

जननादृष्टात्पितरौ पुत्रा जामातरो व्ययादृष्टात् ।
कलहादृष्टाज्ज्ञातय इति निर्णीते किमेष्टव्यम् ॥ ४० ॥

स्वपितुः परलोकाय स्वयमनुदिवसं यदाचरति ।
क्रियतामिदमुपमानं किं नालं पुत्रवैराग्ये ॥ ४१ ॥

अननुगते दारिद्र्ये किमनुगतं लक्षणं दृष्टम् ।
कामस्या*परिपूर्तौ कृपणं जगदा चतुर्वदनात् ॥ ४२ ॥

न खलु धनत्वं जातिर्यस्य यदिष्टं तदेव तस्य धनम् ।
तत्तदिव पामराणामाकिंचन्यं धनं विदुषाम् ॥ ४३ ॥

स्वीक्रियते यदि तृष्णा स्वीकर्तव्यं जगत्समस्तमपि ।
स्वीक्रियते यदि शान्तिः स्वात्मापि स्वस्य भवति न वा ॥

यद्दातारं वशयति यत्परिजनमस्य सान्त्वयति ।
यदपत्रपते नान्तर्भावी लाभः स कस्य समः ॥ ४५ ॥

---

* पूर्तिर्यदि

प्रादेशमात्रमुदरं परिपूरयितुं कियानयं यत्नः ।
चुलकेनाम्भः पातुं खनितव्यः किं तडागोऽपि ॥ ४६ ॥

यामार्धमसंस्काराद्यामद्वयमनशनाच्च सुव्यक्ते ।
शारीरे सौन्दर्येऽभिनिविशन्ते कियन्मूढाः ॥ ४७ ॥

वन्ध्येत्याहुस्तरुणीं जरतीति परित्यजन्ति बहुपुत्राम् ।
अपि निन्दन्त्यल्पसुतां का गृहिणी कामिनां हृद्या ॥

यान्ति शुचमकृतदारा द्वे भार्ये नेति कृतदाराः ।
ते परदारा नेति स्त्रीभिस्तृप्तान्न पश्यामः ॥ ४९ ॥

मदनस्याज्ञाकरणे मन्ये जगदखिलमेकरूपमिदम् ।
तिर्यञ्च इति नरा इति देवा इत्यन्यतो भेदः ॥ ५० ॥

शुक्लविमोकस्थानं मलमूत्रत्यागदेशवत्किमपि ।
स्त्रिय इति विधिना विहितं कियदत्र जना निमज्जन्ति ॥

वेदानधीत्य विधिवन्मीमांसित्वा तदर्थं च ।
दाराः कर्तव्या इति केनेदं प्रहसनं कथितम् ॥ ५२ ॥

दुःखेनोपार्ज्यन्ते पाल्यन्ते प्रत्यहं च लाल्यन्ते ।
वामाः स्त्रियो विमूढैरुपभुञ्जानाः सुखं द्विगुणम् ॥ ५३ ॥

अश्नीत पिबत खादत जागृत संविशत चलत तिष्ठत वा ।
सकृदपि चिन्तयतान्तः सावधिको देहबन्ध इति ॥ ५४ ॥

किं विजितया पृथिव्या किं काञ्चनभूभृता करस्थेन ।
किं दिव्याभिः स्त्रीभिर्भर्तव्ये ब्रह्मणा लिखिते ॥ ५५ ॥

जीवति कतिचिन्निमिषान्कतिचित्तेषु श्रुतीरधीत इव ।
तावत्येवाकुलयति तन्त्राणि नवानि चातनुते ॥ ५६ ॥

स्वल्पो जीवनकालः स्वल्पा धीः परिचयः स्वल्पः ।
तदपि तरेम कथंचिच्छ्रुतयो यदि नोपजायन्ते ॥ ५७ ॥

कुत आगतं न जाने क नु वा गन्तव्यमिदमपि न जाने ।
संचरसि कदानीं संसारपथे महातमसि ॥ ५८ ॥

तमसावृताश्चरन्तः सविधे दूरे च नावयन्त्यर्थान् ।
अवयन्ति तु विस्पष्टं *तडिति शिरस्यभिहते मूढाः ॥५९॥

निमिषन्त्यत्र तरुण्यस्तत्र तरुण्यो न निमिषन्ति ।
ईदृक्षो हि विशेषः स्वर्गः स्वर्ग इति किं तत्र ॥ ६० ॥

कोपो मैत्रावरुणेः शापो वा तार्किकस्य मुनेः ।
संस्मर्येते यदि सकृच्छत्रोरपि मास्तु शक्रपदम् ॥ ६१ ॥

* तडिति

गच्छत्वमरावत्यां गच्छतु चतुराननस्य वा नगरे ।
पुनरागन्तव्यं यदि पुंसा किं साधितं भवति ॥ ६२ ॥

भुक्ता बह्वो दारा लब्धाः पुत्राश्च पौत्राश्च ।
नीतं शतमप्यायुः सत्यं वद मर्तुमस्ति मनः ॥ ६३ ॥

विश्लेषणस्वभावान्विषयान्पश्यन्करोति को ममताम् ।
नश्यदवस्थापन्नं कः क्रीणीते धनैरश्वम् ॥ ६४ ॥

अन्नाभावे मृत्युः शालिभिरन्नानि शालयो वृष्ट्या ।
वृष्टिस्तपसेति वदन्नमृत्यवे तत्तपश्चरतु ॥ ६५ ॥

किं न निगृह्णन्ति मनः किं न भजन्ते जनाः शिवं शरणम् ।
अभिसंधिभेदमात्रान्मोक्षोपाये न बध्यन्ते ॥ ६६ ॥

भोगाय पामराणां योगाय विवेकिनां शरीरमिदम् ।
भोगाय च योगाय च न कल्पते दुर्विदग्धानाम् ॥ ६७ ॥

ब्राह्मणचण्डाला इत्याह मनुर्यन्महापथिकान् ।
भवमार्गमहापथिकानधिकृत्यैव प्रवृत्तं तत् ॥ ६८ ॥

एकद्वाः क्षितिपतिषु द्वित्रा देवेषु पञ्चषा द्रुहिणे ।
एतावन्तो जगति ब्रह्मानन्दार्णवस्य कणाः ॥ ६९ ॥

अज्ञानेनापिहिते विज्ञाने कर्म किं कुरुते ।
विकले चक्षुषि तमसा व्यादाय मुखं किमीक्षेत ॥ ७० ॥

अतिकलुषमाशुनश्वरमापातस्फुरणमनभिलापकरम् ।
अपि हृष्यन्ति जनाः कथमवलम्ब्य ज्ञानखद्योतम् ॥

प्रयुतं नियुतं वापि प्रदिशन्ति प्राकृताय भोगाय ।
क्रीणन्ति न बिल्वदलैः कैवल्यं पञ्चषैर्मूढाः ॥ ७२ ॥

यावत्किल चेष्टन्ते तावत्पाशे निबध्यते ग्रन्थिः ।
निभृतं यदि वर्तन्ते कालेन स्रंसते पाशः ॥ ७३ ॥

उपरुन्धन्ति श्वासान्मुनयो नाश्नन्ति न पिबन्ति ।
स्तूयन्ते किं मुनयः कण्ठे कुर्वन्ति कनकपाशमिमे ॥

कामं जनाः स्मयन्ते कैलासविलासवर्णनावसरे ।
साधनकथनावसरे साचीकुर्वन्ति वक्त्राणि ॥ ७५ ॥

वङ्गाः कथमङ्गाः कथमित्यनुयुङ्क्ते वृथा देशान् ।
कीदृक्कृतान्तपुरमिति कोऽपि न जिज्ञासते लोकः ॥

त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते नासौ ।
कर्तव्यो ममकारः किं तु स सर्वत्र कर्तव्यः ॥ ७७ ॥

पुत्रा इति दारा इति पोष्यान्मूर्खो बहिर्जनान्ब्रूते ।
अन्धे तमसि निमज्जन्नात्मा पोष्य इति नावैति ॥ ७८ ॥

यच्चिन्तितमधिगमैं यच्च चिरं चिन्तितं नरके ।
विषयानिलसंसर्गान्मिमृजे तत्सर्वमेकपदे ॥ ७९ ॥

बाह्यगतागतशीला प्राणस्य श्वासलक्षणा वृत्तिः ।
कर्षति मनसो वृत्तिं कुलटेव कुलस्त्रियं मुग्धाम् ॥ ८० ॥

अतिगम्भीरमनाविलमक्षोभ्यमदृष्टपारमविलङ्घ्यम् ।
अविरलतरङ्गसंकुलमैक्षिषि विज्ञानसागरं महताम् ॥

घोरं भवमपहातुं कतिचिदघोरं भवं प्रपद्यन्ते ।
संसरणकातराणां संसरणं शांभवी भक्तिः ॥ ८२ ॥

पाशो यदि मोक्तव्यः पशुपतिरेवोपसत्तव्यः[1] ।
न खलु व्यतिमुच्यन्ते पशवः पाशेन संबद्धाः ॥ ८३ ॥

अलमलमनुभूताभिर्मातृभिरलमस्तु पितृभिश्च ।
भवितव्यं यदि नित्यवदर्थे मातुः पितुश्चास्तु ॥ ८४ ॥

धन्यास्ते बहुदेवाः स्वामिनि येषां न दुर्भिक्षम् ।
जातु न जानीमो वयमेकमपि स्वामिनं पूर्णम् ॥ ८५ ॥

---

1. रेवानुसर्तव्यः

सन्तु बृहन्तो देवाः किं तु न तान्नन्तुमीहते चेतः ।
आढ्यवदान्यन्यायादन्तकजितमेव चिन्तयते ॥ ८६ ॥

निध्यायासि विषयसुखं न ध्यायासि विषममस्य परिपाकम् ।
बन्धुं तमेव चिन्तय बन्द्धुं मोक्तुं च यः क्षमते ॥ ८७ ॥

सदनं गुरूपसदनं चरणं पञ्चाक्षरीपुरश्चरणम् ।
धनमभिलाषनिरोधनमत्याश्रमवर्तिनां पुंसाम् ॥ ८८ ॥

स विधिर्यत्ते विदधति स प्रतिषेधो यतो निवर्तन्ते ।
सोपनिषद्यद्ब्रुवते शैवाश्रमवर्तिनो धीराः ॥ ८९ ॥

कौ पितरौ यौ जगतां कः स्वामी यः प्रपञ्चस्य ।
प्रत्यक्षमिते भेदे तत्किमिदं किमिति कः प्रश्नः ॥ ९० ॥

त्यज संसारमसारं भज शरणं पार्वतीरमणम् ।
विश्वसिहि श्रुतिशिखरं विश्वमिदं तव निदेशकरम् ॥९१॥

भव्यमभव्यं वा नः प्रलिखतु वेधाः सुदुर्मेधाः ।
सव्यमसव्यं वा नश्चरणं शरणं महेशस्य ॥ ९२ ॥

वेधाः कथं हरिः कथमिति तु प्रश्ने वयं मूकाः ।
शिवमेकं जानीमस्तस्मादन्यं न जानीमः ॥ ९३ ॥

दारुणमसिपत्रवनं दारुणतममन्धतामिस्रम् ।
का वा ततः क्षतिर्नः शैवा वयमा चतुर्वदनात् ॥ ९४ ॥

कृतदीक्षो घोरमखे कुलकूटस्थो भरद्वाजः ।
विद्येश्वरेषु कश्चन पितामहो न इति विस्रम्भः ॥ ९५ ॥

कलहः कदाऽपि मास्त्वित कलितशरीरैक्ययोः शिवयोः ।
अहमस्म्यहमस्मीति प्राप्तः कलहो मम त्राणे ॥ ९६ ॥

नरकायापि न भोगाश्चराधमायापि नान्यसुरान् ।
मन्यन्ते कतिचिदमी माहेश्वरमाश्रिता योगम् ॥ ९७ ॥

ज्ञातुं हातुं विषयं श्रोतुं मन्तुं प्रहीतुमात्मानम् ।
वत्सा यदि न घटध्वे तत्साधयताविमुक्ताय ॥ ९८ ॥

सांख्यं योगो नियमा भक्तिः कर्म प्रपत्तिरिति ।
एकत्र सकलमेतत्केवलमविमुक्तमेकत्र ॥ ९९ ॥

बद्धः कस्ते वक्ष्यति
मुक्तो मुक्तिं न जानाति ।
यास्यसि चेदविमुक्तं
ज्ञास्यसि विश्वेश्वरस्य मुखात् ॥ १०० ॥

न गृहीतं श्रुतिहृदयं
 न च निगृहीतं परिप्लवं हृदयम् ।
इच्छामि च धाम परं
 गच्छामि च विश्वनाथपुरम् ॥ १०१ ॥

इति श्रीनीलकण्ठदीक्षितविरचितं
वैराग्यशतकं संपूर्णम् ॥

मातृकान्तरे एते श्लोकाः अधिकतया दृश्यन्ते—

न स्निह्यति न द्रुह्यति न स्मयते नापि विस्मयते ।
ज्ञानविहीनो जन्तुस्तिष्ठति पाषाणवत्किमितः ॥

सरिदिति सरितां पतिरिति गिरिरित्यटवीति गगनमार्ग इति
गणयति न कमपि विघ्नं गतिरिव वायोर्मतिर्महताम् ॥

आमानुषमावेधसमनुभूताः संसरद्भिरानन्दाः ।
अज्ञातं जिज्ञासितुमर्हं तद्ब्रह्मनिर्वाणम् ॥

॥ श्रीः ॥

# ॥ शान्तिविलासः ॥

वंशे कस्मिन्नजनिषि कयोः पुत्रतामग्रहीषं
कत्यश्रौषं तदपि कतिधा तत्र सद्भ्यः कतिभ्यः ।
किं नाद्राक्षं व्यसनमपि वा किं सुखं नान्वभूवं
नोपारंसीत्तदपि हृदयं कीदृशो मे विपाकः ॥ १ ॥

पादौ मे स्तः परमचतुरौ कीकटानेव गन्तुं
वागप्यास्ते निभृतमनृतान्येव वक्तुं वचांसि ।
मीमांसन्ते मम च मतयो दोषदृष्टौ परेषां
पङ्गुर्मूकः पशुरपि भवाम्यात्मनीने तु कृत्ये ॥ २ ॥

आमाराद्ध्वं न गणितमिदं जीवितं वा धनं वा
यस्याः प्रीतिर्मनसि कलिता ज्यायसी मोक्षतोऽपि ।
सैवेदानीं वयसि चलिते संप्रहीणे च वित्ते
तूलायापि त्रिपुरहर मां मन्यते नैव भार्या ॥ ३ ॥

कृत्वा पापान्यपि खलु मया पोषिताः शैशवे ये
निद्राहारावपि विजहता शिक्षिता ये कलासु ।
प्रादुर्भूताः स्वयमिव हि ते प्राक्तनादृष्टलब्ध-
प्रज्ञोन्मेषा इव च तनया न स्मरन्त्यात्मनोऽपि ॥ ४ ॥

दाराः पुत्राः परमसुहृदो बान्धवाः किंकरा वा
स्वप्नावस्थास्वपि च विरहं ये मया न क्षमन्ते ।
[1]अत्यासन्ने तपनतनयस्याज्ञया दूतवर्गे
तेष्वेकोऽपि स्मरहर न मे गन्तुमन्वस्ति जन्तुः ॥ ५ ॥

राज्ञो भृत्या यदि परिचिता देशिकस्यैष लाभो
राजद्वारे यदि खलु गतं नैमिशे तत्प्रविष्टम् ।
राजा दृष्टोऽथ च यदि परं ब्रह्म साक्षात्कृतं तत्
त्यक्तो देहो यदि नृपकुले मादृशां सोऽपवर्गः ॥ ६ ॥

यत्तीर्थानामटनमथ यत्पूजनं देवताना-
मिष्टापूर्तव्यसनमपि यद्यञ्च दाक्ष्यं कलासु ।
अर्थप्राप्त्यौपयिकमखिलं जायते मादृशां तत्
ते चाप्यर्था धरणिशरणा भूमिभृत्सात्कृता वा ॥ ७ ॥

1. अद्यासन्ने

आ कौमाराद्गुरुचरणशुश्रूषया ब्रह्मविद्या-
स्वाध्यायाध्यामहह महतीमर्जितं कौशलं यत्।
निद्राहेतोर्निशि निशि कथाः शृण्वतां पार्थिवानां
कालक्षेपौपयिकमिदमप्याः कथं पर्यणंसीत् ॥ ८ ॥

छाया तोयं वसनमशनं वाहनं दीपिका वा
क्रेतुं यस्मिन्न कल सुलभं किंचिदप्येषु मर्त्यैः।
तस्मिन्दूरे पथि तनुभृतां सर्वथैवाभिगम्ये
प्रस्थानार्हं कर्मापि तु विधिं वत्सरा न स्मरामः ॥ ९ ॥

आकर्ण्यन्ते तपनतनयग्रामसंलापघोषा
मन्दं मन्दं हसति निहितः कालपाशोऽपि कण्ठे।
आपृच्छयन्ते कृतजिगमिषासंभ्रमाः प्राणत्राता
नैवेदानीमपि विषयवैमुख्यमभ्येति चेतः ॥ १० ॥

चक्षुष्यन्धे चलति दशने श्मश्रुणि श्वेतमाने
मीदत्यङ्गे मनसि कलुषे कम्पमाने कराग्रे।
दूतैरेतैर्दिनकरभुवः शश्वदुद्बोध्यमाना-
स्त्रातुं देहं तदपि भिषजामेव सान्त्वं वदामः ॥ ११ ॥

श्रान्तो बह्निर्जठरपिठरे संस्थिता कामवार्ता
धावं धावं दिशि दिशि शनैरिन्द्रियाश्वा निपेतुः ।
एवं दैवादुपरममगादेष मे वैरिवर्ग-
श्चेतस्त्वेकं न वशमयते किं करोमि क्व यामि ॥ १२ ॥

नानोपायैर्दिशि दिशि धनान्यर्जयित्वा व्ययित्वा
सम्यक्संपादितमिदमहो[1] स्थौल्यमेकं शरीरे ।
श्रुत्वा श्रुत्वा बहुजनमुखादायुषैतावतापि
प्राप्तं दर्शावधितिमिरवद्गाढमज्ञानमेकम् ॥ १३ ॥

क्वेक्षन्ते मां क्वचन शयितं किंकरा दण्डपाणे-
रीक्षन्तां वा तदपि मयि किं कुर्युरुद्दामवृत्ते ।
कुर्युः किंचित्प्रसभमपि वा घातयिष्यामि राज्ञ-
स्त्वन्वधैर्यं परमिह वहन्नन्तकं न स्मरामि ॥ १४ ॥

वेदा वा स्युर्वितथवचना विस्मरेदीश्वरो वा
धर्माधर्मस्थितिविरचनामन्तको वा मृषा स्यात् ।
नित्यो वा स्यामहमिति बहूनुल्लिखन्तः समाधी-
न्मेदोवृद्ध्या मुदितमनसः सर्वतो निर्वृताः स्मः ॥ १५ ॥

---

* मिह

यामे यामे गलति वपुषः स्रंसते संधिबन्धः
श्वासे श्वासेऽपि च विचलने क्षीयते दीर्घमायुः ।
भुक्ते भुक्तेऽपि च सुखलवे लुप्यते पुण्यराशिः
कृत्ये कृत्ये निरवधि पुनर्वर्धते पातकं नः ॥ १६ ॥

गन्तव्योऽध्वा सकलखुरवस्थानसंपातभूमि-
र्गत्वा दृश्यस्त्रिभुवनजनायुष्कलान्तः कृतान्तः ।
द्रष्टा लभ्या निरयजनिता यातना नैकभेदा
विस्मृत्येदं निखिलमपि तु व्यर्थमायुर्नयामः ॥ १७ ॥

काले काले न किमुपनतं भुञ्जते भोज्यजातं
गृह्णन्त्यम्भो न किमथ न किं संविशन्ति क्षपासु ।
पुष्णन्ति स्वांश्च किमु पृथुकान्स्त्रीषु किं नो रमन्ते
कृत्याकृत्यव्यपगतधियां कस्तिरश्चां च भेदः ॥ १८ ॥

कृच्छ्राल्लब्धं धनमपि शतांशाधिकप्राप्तिलोभा-
त्पत्रे किंचिल्लिखितमुपलभ्यैव सर्वं त्यजामः ।
शास्त्रैः सिद्धे बहुशतगुणाधिक्यलाभे परत्र
व्यर्थाशङ्काकलुषमनसो नोत्सृजामोऽर्धलेशम् ॥ १९ ॥

जीर्णे रुग्णे विकलकरणे शत्रुभिर्वा गृहीते
स्वस्मिन्कोऽर्थो भवति सुखदः कश्च कामप्रसङ्गः।
मा भूदेतत्सकलमथवा स्वायुषः किं प्रमाणं
निश्चित्यैवं दुरितनिचयश्चीयते निर्विशङ्कैः ॥ २० ॥

आयान्त्यग्रे ननु तनुभवा उत्तमर्णा इवेमे
शय्यालग्नाः फणभृत इवाभान्ति दारा इदानीम्।
कारागेहप्रतिममधुना मन्दिरं दृश्यते मे
तत्र स्थातुं प्रसजति मनो न क्षणं न क्षणार्धम् ॥ २१ ॥

जातं जातं गतमपि गतं बाल्यतो लौल्यतो वा
नेतः स्थेयं क्षणमपि गृहे मुञ्चतः को मुहूर्तः।
इत्यत्यन्तव्यवसितधियो निःसरन्तोऽपि गेहा-
दावर्तन्ते झटिति रुदतां सान्त्वहेतोः शिशूनाम् ॥ २२ ॥

नैव ब्रूमो वयमतिथयोऽभ्यागता बन्धुवर्गा
दीनानाथाः सुहृद इति ये तेषु कार्या दयेति।
यं त्वं पोष्यं मनसि कुरुषे नित्यमात्मानमेकं
जन्मन्यस्मिन्नपि विमृहि तं सर्वदेत्युल्लपामः ॥ २३ ॥

को नु व्यासः क इव स मनुः को न्वसौ याज्ञवल्क्यो
यैरुद्घुष्टं हितमसकृदस्मासु पित्रेव पुत्रे ।
पश्यामस्तान्निरुपधिकृपासागराँल्लोकबन्धू-
न्पश्यामोऽस्माभिरवधितमःक्ष्माधरान्ब्रह्मबन्धून् ॥ २४ ॥

यत्तामिस्रे नरककुहरे यद्बहिश्चक्रवाला-
द्यत्पाताले यदपि धरणौ वार्षिकीषु क्षपासु ।
रूढं गाढं तम इति समस्तं च तच्चिन्त्यमानं
नास्माकान्तःकरणतमसो दासभावेऽपि योग्यम् ॥ २५ ॥

सर्वानर्थप्रथमकरणे सर्वभावैर्जिहास्ये
देहे मोहो यदि परिणतः पोषणीयो मयेति ।
आस्तामेवं वपुरिदमिवागामि चास्माकमेवे-
त्येषाप्यास्तां मतिरिति परं धर्मशास्त्रेषु घोषः ॥ २६ ॥

कामी कामव्रणपरिगतः कामिनीरेव हित्वा
भुङ्क्ते पश्चादपगतभयं कामिनीनां सहस्रम् ।
इत्थंकारं विषयसुखभोगैकतानैर्नरैर-
प्यस्मिन्देहे कतिपयदिनान्येष भोगो विवर्ज्यः ॥ २७ ॥

न्यायग्रन्थादपि किमधिकं लभ्यमुन्मार्गवृत्त्या
 वेदाभ्यासादपि किमधिकं पर्वदेशेषु भोज्यम् ।
भार्याभोगादपि भवति कः स्वर्गकान्तासु भोगः
 भावो नेति श्रुतिविषयता विश्वमाधुर्यहेतुः ॥ २८ ॥

आस्तिक्यं चेद्धनमखिलमप्यर्थिसात्कर्तुमर्हं
 नास्तिक्यं चेदपि सुतरां भोगहेतोरपास्यम् ।
अस्पृष्ट्वापि स्वयमतिरहः स्थाप्यते यत्तदन्त-
 स्तस्मिन्हेतुः क इति निभृतं तर्कयामो न विद्मः ॥ २९ ॥

श्वानः पुच्छाञ्चलकुटिलता सूकराः
 कीशा दन्तप्रकटनविधिं गर्दभा रूक्षघोषम् ।
मर्त्या वक्षःश्मश्रुमपि च स्त्रीषु दृष्ट्वा रमन्ते
 तत्सौन्दर्यं किमिति फलितं तत्तदज्ञानतोऽन्यत् ॥ ३० ॥

रन्तुं प्राप्तो दशति दशनैराननं चेत्प्रियाया
 भोक्तुं प्राप्तः किमिति न दशेद्भक्ष्यं मदातुः ।
इत्थं व्यक्ते हृदयजनुषः पामरोन्मादकत्वे
 हातुं सद्यः प्रभवति न कोऽप्यन्ततो लज्जितुं वा ॥ ३१ ॥

दाराः पुत्राः शयनमशनं भूषणाच्छादने वा
यद्येतद्धं पुमभिलषितं तेषु माङ्गलिकः कः ।
किं त्वेतेषां भवति नियमः सेवने कोऽपि कोऽपि
द्वेषस्तास्मिन्नपि यदि भवेत्तव वक्ता कृतान्तः ॥ १२ ॥

वेदाभ्यासव्यसनरसिकैः स्थीयते तावता किं
सूक्ष्मा बुद्धिः श्रुतमिव विशत्यश्रुतं तावता किम् ।
जल्पारम्भे जयति नियतं वादिनस्तावता किं
निर्वेदार्तं न यदि हृदयं शान्तिमभ्येति पुंसः ॥ १३ ॥

यस्त्वत्यन्तव्यवसितमतिः संजिघृक्षेत धर्मं
खट्वाङ्गादेरिव न किमलं तस्य यामार्धमायुः ।
दुष्पाण्डित्यादपहृतमतिर्यः पुनः संशयात्मा
कस्मै तस्य प्रभवतु वृथा काकवद्दीर्घमायुः ॥ १४ ॥

अर्था न स्युर्यदि विजहिमो धर्ममर्थैकसाध्यं
कायक्लेशैः कतिकतिविधैः साधनीयो न धर्मः ।
कायः श्रान्तो यदि भवति कस्तावता धर्मलोप-
श्चित्तं दत्त्वा सकृदपि शिवे चिन्तितं साधयामः ॥ १५ ॥

स्वेनैवोक्तं निगमवचसा बोधनीयास्तु जीवा
जीवैरेवेत्यपि च मुनिभिः कारितं धर्मशास्त्रम् ।
तत्पश्यन्तु स्वयमिति भवो दारुणश्चाल्यतेऽसा-
वद्यापि स्मो यदि खलु जडाः किं विधत्तां शिवोऽपि ॥

येनाक्रान्ताः सलिलनिधयो येन सृष्टा प्रतिद्यौः
शस्त्राण्यस्त्राण्यपि कवलितान्येकया यस्य यष्ट्या ।
कस्तादृक्षः प्रभवतु जनो देवभूदेववर्गे
कालः कीटानिव कवलयामास तानप्ययत्नम् ॥ १७ ॥

कायस्थैर्यं करणपटुतां बन्धुसंपत्तिमर्थं
चातुर्यं वा किमिव हि बलं बिभ्रतो निर्भराः स्मः ।
अन्त्यः श्वासः किमयमथवोपान्त्य इत्यामृशन्तो
विस्मृत्यैर्हि निमिषमपि किं वर्तितुं पारयामः ॥ १८ ॥

अभ्यस्यादौ श्रुतिमथ गृहं प्राप्य लब्ध्वा महार्थो-
निष्ठा यज्ञैर्जनिततनयः प्रव्रजेदायुषोऽन्ते ।
इत्याचष्टे य इह स मनुर्याज्ञवल्क्योऽपि वा मे
तावत्कालं प्रतिभवति चेदायुषस्तत्प्रमाणम् ॥ १९ ॥

अन्नं धान्यं वसु वसुमतीत्युत्तरेणोत्तरेण
व्याकृष्यन्ते परमकृपणाः पामरा यद्वदित्थम् ।
भूमिः खं द्यौर्द्रुहिणगृहमित्युत्तरेणोत्तरेण
व्यामुह्यन्ते विमलमतयोऽप्यस्थिरेणैव धाम्ना ॥ ४० ॥

प्रायश्चित्तं सकृदुपनते वा प्रमादात्कृते वा
भूयो भूयोऽप्यवहिततरैः साधिते कः समाधिः ।
कारुण्याब्धिर्यदि पुरहरः सत्सु कामं दयेत
भ्रष्टे मादृश्यपि स दयते चेत्क्षतो धर्मसेतुः ॥ ४१ ॥

साध्या शंभोः कथमपि दयेत्यप्यसाध्योपदेशः
कोपं तस्य प्रथममपनुद्यैव साध्यः प्रसादः ।
कोपो वर्णाश्रमनियमिताचारनिर्लङ्घनोत्थः
शान्तिं नेयः स कथमधुनाप्यव्यवस्थाप्रवृत्तेः ॥ ४२ ॥

इष्टापूर्तैर्निगमपठनैः कृच्छ्रचान्द्रायणाद्यैः
स्वामिन्नन्यैरपि तव मनः काममावर्जयेम ।
मध्ये मध्ये यदि न निपतेत्कर्मणां चोदितानां
ज्ञानं भ्रद्धेत्युभयमपि नो जातिवैर्यर्गलेव ॥ ४३ ॥

निर्मर्यादः परमचपलो निःसमाज्ञानराशि-
मोहक्षोऽस्यः क इति भुवने मार्गणीयं त्वयैव ।
ईदृक्षेऽपि क्वचिदिह दयेयेति कौतूहलं चे-
त्स्वामिन्विश्वेश्वर तव भवं निस्तरेयं तदाहम् ॥ ४४ ॥

पश्चात्तप्ताः कथमपि विधेः किंकरीभूय कुर्मः
सेवां शंभोरिति च नियमं वापि संकल्पयामः ।
आयुः किं मे किमिव करणं दुस्तरे संकटेऽस्मि-
न्स्वामिन्गौरीरमण शरणं नस्त्वमेव त्वमेव ॥ ४५ ॥

सम्यङ्मुक्ताश्रिभिरपि मलैश्छिद्रिकासैकरूपा-
स्त्वन्निध्यानप्रवणमनसः सूरयस्त्वत्पुरे ये ।
तेषां संदर्शयितुमपरिज्ञातपूर्वं कदाचि-
ज्जन्तुं मुग्धं शिव नयसि किं विश्वपारं पुरं माम् ॥ ४६ ॥

दिष्ट्या लब्धं द्विजवरकुले जन्म तत्रापि दिष्ट्या
धर्माधर्मस्थितिरवगतैव प्रसादाद्गुरूणाम् ।
जन्मन्यस्मिन्नपि यदि न मे संभवेदास्तिकत्वं
निस्तारः किं निरयभयनात्सर्वमोक्षेऽपि लभ्यः ॥ ४७ ॥

भव्ये देहे पटुषु करणेष्वालये श्रीसमृद्धे
कौमारान्ते वयसि कथमप्यप्रवृत्ते च दुःखे ।
प्रत्यक्पुष्पीप्रसवविधया यस्य पुंसो निसर्गा-
त्प्रत्यग्वक्त्रं भवति हृदयं कश्चनोऽप्यस्ति धन्यः ॥ ४८ ॥

नाहं याचे पदमुडुपतेर्नाधिकारं मघोनो
नापि ब्राह्मीं भुवनगुरुतां का कथाऽन्यप्रपञ्चे ।
अन्यस्यान्यः श्रियमभिलषन्नस्तु कस्तस्य लोको
मह्यं शंभो दिश मसृणितं मानकानन्दमेव ॥ ४९ ॥

आ गर्भादा कुलपरिवृढादा चतुर्वक्त्रतोऽपि
त्वत्पादाब्जप्रपदनपरान्वेत्सि नश्चन्द्रमौले ।
मायायाश्च प्रपदनपरेष्वप्रवृत्तिं त्वमात्थ
स्वामिन्नेवं सति यदुचितं तत्र देवः प्रमाणम् ॥ ५० ॥

दण्डं धत्ते सकलजगतां दक्षिणो यः कृतान्तो
नामाप्यस्य प्रतिभयतनोर्नोपगृह्णीमहीति ।
प्राप्तः स्वस्तं निगमवचसामुत्तरो यः कृतान्तो
यद्वा तद्वा भवतु न पुनस्तस्य पश्येम वक्त्रम् ॥ ५१ ॥

इति श्रीनीलकण्ठदीक्षितविरचित:
शान्तिविलास: संपूर्ण: ॥

॥ श्रीः ॥

# ॥ कलिविडम्बनम् ॥

—*—

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः ।
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥ १ ॥

असंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनि ।
हासो राज्ञः स्तवश्चेति पञ्चैते जयहेतवः ॥ २ ॥

उच्चैरुद्घोष्य जेतव्यं मध्यस्थश्चेदपण्डितः ।
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥ ३ ॥

लाभो हेतुर्धनं साध्यं दृष्टान्तस्तु पुरोहितः ।
आत्मोत्कर्षो निगमनमनुमानेष्वयं विधिः ॥ ४ ॥

अभ्यास्यं लज्जमानेन तत्त्वं जिज्ञासुना चिरम् ।
जिगीषुणा ह्रियं त्यक्त्वा कार्यः कोलाहलो महान् ॥

पाठनैर्ग्रन्थनिर्माणैः प्रतिष्ठा तावदाप्यते ।
एवं च तद्व्युत्पत्तिरायुषोऽन्ते भवेन्न वा ॥ ६ ॥

श्रोतारः के भविष्यन्ति मूर्खस्य जगतीतले ।
न स्तौति चेत्स्वयं च स्वं कदा तस्यास्तु निर्वृतिः ॥ ७ ॥

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥ ८ ॥

अगतित्वमतिश्रद्धा ज्ञानाभावेन तृप्तता ।
त्रयः शिष्यगुणा ह्येते मूर्खाचार्यस्य भाग्यजाः ॥ ९ ॥

यदि न क्वापि विद्यायां सर्वथा क्रमते मतिः ।
मान्त्रिकास्तु भविष्यामो योगिनो यतयोऽपि वा ॥ १० ॥

अविलम्बेन संसिद्धौ मान्त्रिकैराप्यते यशः ।
विलम्बे कर्मबाहुल्यं विख्याप्याप्यते धनम् ॥ ११ ॥

सुखं सुखिषु दुःखं च जीवनं दुःखशालिषु ।
अनुग्राह्यते येषां ते धन्याः खलु मान्त्रिकाः ॥ १२ ॥

यावदज्ञानतो मौनमाचारो वा विलक्षणः ।
तावन्माहात्म्यरूपेण पर्यवस्यति मान्त्रिके ॥ १३ ॥

चारान्विचार्य दैवज्ञैर्वक्तव्यं भूभुजां फलम् ।
ग्रहचारपरिज्ञानं तेषामावश्यकं यतः ॥ १४ ॥

पुत्र इत्येव पितरि कन्यकेत्येव मातरि ।
गर्भप्रश्नेषु कथयन्दैवज्ञो विजयी भवेत् ॥ १५ ॥

आयुःप्रश्ने दीर्घमायुर्वाच्यं मौहूर्तिकैर्जनैः ।
जीवन्तो बहु मन्यन्ते मृताः प्रक्ष्यन्ति कं पुनः ॥ १६ ॥

सर्वं कोटिद्वयोपेतं सर्वं कालद्वयावधि ।
सर्वं व्यामिश्रमिव च वक्तव्यं दैवचिन्तकैः ॥ १७ ॥

निर्धनानां धनावाप्तिं धनिनामधिकं धनम् ।
ब्रुवाणाः सर्वथा ग्राह्या लोकैर्ज्यौतिषिका जनाः ॥ १८ ॥

शतस्य लाभे ताम्बूलं सहस्रस्य तु भोजनम् ।
दैवज्ञानामुपालम्भो नित्यं कार्यविपर्यये ॥ १९ ॥

अपि सागरपर्यन्ता विचेतव्या वसुंधरा ।
देशो ह्यरत्निमात्रोऽपि नास्ति दैवज्ञवर्जितः ॥ २० ॥

वारान्केचिद्ग्रहान्केचित्केचिदृक्षाणि जानते ।
त्रितयं ये विजानन्ति ते वाचस्पतयः स्वयम् ॥ २१ ॥

नैमित्तिकाः स्वप्नदृशो देवतोपासका इति ।
निसर्गशत्रवः सृष्टा दैवज्ञानाममी त्रयः ॥ २२ ॥

स्वस्थैरसाध्यरोगैश्च जन्तुभिर्नास्ति किंचन ।
कातरा दीर्घरोगाश्च भिषजां भाग्यहेतवः ॥ २३ ॥

नातिधैर्यं प्रदातव्यं नातिभीतिश्च रोगिणि ।
नैश्चिन्त्यान्नादिमे दानं नैराश्यादेव नान्तिमे ॥ २४ ॥

भैषज्यं तु यथाकामं पथ्यं तु कठिनं वदेत् ।
आरोग्यं वैद्यमाहात्म्यादन्यथात्वमपथ्यतः ॥ २५ ॥

निदानं रोगनामानि साम्यासाम्ये चिकित्सितम् ।
सर्वमप्युपदेक्ष्यन्ति रोगिणः सदने स्त्रियः ॥ २६ ॥

जृम्भमाणेषु रोगेषु म्रियमाणेषु जन्तुषु ।
रोगतत्त्वेषु शनकैर्व्युत्पद्यन्ते चिकित्सकाः ॥ २७ ॥

प्रवर्तनार्थमारम्भे मध्ये त्वौषधहेतवे ।
बहुमानार्थमन्ते च जिहीर्षन्ति चिकित्सकाः ॥ २८ ॥

लिप्समानेषु वैद्येषु चिरादासाद्य रोगिणम् ।
दायादाः संप्ररोहन्ति दैवज्ञा मान्त्रिका अपि ॥ २९ ॥

रोगस्योपक्रमे सान्त्वं मध्ये किंचिद्धनव्ययः ।
शनैरनादरः शान्तौ स्नातो वैद्यं न पश्यति ॥ ३० ॥

दैवज्ञत्वं मान्त्रिकता भैषज्यं चाटुकौशलम् ।
एकैकमर्थलाभाय द्वित्रियोगस्तु दुर्लभः ॥ ३१ ॥

अनृतं चाटुवादश्च धनयोगो महानयम् ।
सत्यं वैदुष्यमित्येष योगो दारिद्र्यकारकः ॥ ३२ ॥

कातर्यं दुर्विनीतत्वं कार्पण्यमविवेकताम् ।
सर्वं मार्जन्ति कवयः शालीनां मुष्टिकिंकराः ॥ ३३ ॥

न कारणमपेक्षन्ते कवयः स्तोतुमुद्यताः ।
किंचिदस्तुवतां तेषां जिह्वा फुरफुरायते ॥ ३४ ॥

स्तुतं स्तुवन्ति कवयो न स्वतो गुणदर्शिनः ।
कीटः कश्चिदलिर्नाम कियती तत्र वर्णना ॥ ३५ ॥

एकैव कविता पुंसां ग्रामायाश्वाय हस्तिने ।
अन्ततोऽन्नाय वस्त्राय ताम्बूलाय च कल्पते ॥ ३६ ॥

शब्दाख्यमपरं ब्रह्म संदर्भेण परिष्कृतम् ।
विक्रीयते कतिपयैर्वृथान्यैर्विनियुज्यते ॥ ३७ ॥

वर्णयन्ति नराभासान्वाणीं लब्ध्वापि ये जनाः ।
लब्ध्वापि कामधेनुं ते लाङ्गले विनियुञ्जते ॥ ३८ ॥

प्रशंसन्तो नराभासान्प्रलपन्तोऽन्यथान्यथा ।
कथं तरन्तु कवयः कामपारम्यवादिनः ॥ ३९ ॥

यत्संदर्भे यदुल्लेखे यद्वयङ्ग्ये निभृतं मनः ।
समाधेरपि तज्ज्यायः शंकरो यदि वर्ण्यते ॥ ४० ॥

गृहिणी भगिनी तस्याः श्वशुरौ श्याल इत्यपि ।
प्राणिनां कलिना सृष्टाः पञ्च प्राणा इमेऽपरे ॥ ४१ ॥

जामातरो भागिनेया मातुला दारबान्धवाः ।
अज्ञाता एव गृहिणां भक्षयन्त्याखुवद्गृहे ॥ ४२ ॥

मातुलस्य बलं माता जामातुर्दुहिता बलम् ।
श्वशुरस्य बलं भार्या स्वयमेवातिथेर्बलम् ॥ ४३ ॥

जामातुर्वक्रता तावद्यावच्छ्यालस्य बालता ।
प्रबुध्यमाने सारल्यं प्रबुद्धेऽस्मिन्पलायनम् ॥ ४४ ॥

भार्या ज्येष्ठा शिशुः श्यालः श्वश्रूः स्वातन्त्र्यशालिनी ।
श्वशुरस्तु प्रवासीति जामातुर्भाग्यधोरणी ॥ ४५ ॥

भूषणैर्वसनैः पात्रैः पुत्राणामुपलालनैः ।
सकृदागत्य गच्छन्ती कन्या निर्मार्ष्टि मन्दिरम् ॥ ४६ ॥

गृहिणी स्वजनं वक्ति शुष्काहारं मिताशनम् ।
पतिपक्ष्यांस्तु बह्वाशान्क्षीरपांस्तस्करानपि ॥ ४७ ॥

भार्ये द्वे पुत्रशालिन्यौ भगिनी पतिवर्जिता ।
अश्रान्तकलहो नाम योगोऽयं गृहमेधिनाम् ॥ ४८ ॥

भार्ये द्वे बहवः पुत्रा दारिद्र्यं रोगसंभवः ।
जीर्णौ च मातापितरावेकैकं नरकाधिकम् ॥ ४९ ॥

स्मृते सीदन्ति गात्राणि दृष्टे प्रज्ञा विनश्यति ।
अहो महदिदं भूतमुत्तमर्णाभिशब्दितम् ॥ ५० ॥

अन्तकोऽपि हि जन्तूनामन्तकालमपेक्षते ।
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥ ५१ ॥

न पश्यामो मुखे दंष्ट्रां न पाशं वा कराञ्चले ।
उत्तमर्णमवेक्ष्यैव तथाप्युद्विजते मनः ॥ ५२ ॥

शत्रौ सान्त्वं प्रतीकारः सर्वरोगेषु भेषजम् ।
मृत्योर्मृत्युंजयध्यानं दारिद्र्ये तु न किंचन ॥ ५३ ॥

शक्तिं करोति संचारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधम् ॥ ५४ ॥

गिरं स्खलन्तीं मीलन्तीं दृष्टिं पादौ विसंस्फुटौ ।
प्रोत्साहयति याच्ञायां राजाज्ञेव दरिद्रता ॥ ५५ ॥

जीर्यन्ति राजविद्वेषा जीर्यन्त्यविहितान्यपि ।
आकिंचन्यबलाढ्यानामन्ततोऽश्मापि जीर्यति ॥ ५६ ॥

नास्य चोरा न पिशुना न दायादा न पार्थिवाः ।
दैन्यं राज्यादपि ज्यायो यदि तत्त्वं प्रबुध्यते ॥ ५७ ॥

प्रकाशयत्यहंकारं प्रवर्तयति तस्करान् ।
प्रोत्साहयति दायादांल्लक्ष्मीः किंचिदुपस्थिता ॥ ५८ ॥

विडम्बयन्ति ये नित्यं विदग्धान्धनिनो जनाः ।
त एव तु विडम्ब्यन्ते श्रिया किंचिदुपेक्षिताः ॥ ५९ ॥

प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥ ६० ॥

शृण्वन्त एव पृच्छन्ति पश्यन्तोऽपि न जानते ।
विडम्बनानि धनिकाः स्तोत्राणीत्येव मन्वते ॥ ६१ ॥

आवृत्य श्रीमदेनान्धानन्योन्यकृतसंविदः ।
स्वैरं हसन्ति पार्श्वस्था बालोन्मत्तपिशाचवत् ॥ ६२ ॥

स्तोतव्यैः स्तूयते नित्यं सेवनीयैश्च सेव्यते ।
न बिभेति न जिह्रेति तथापि धनिको जनः ॥ ६३

क्षणमात्रं ग्रहावेशो याममात्रं सुरामदः ।
लक्ष्मीमदस्तु मूर्खाणामादेहमनुवर्तते ॥ ६४ ॥

श्रीमांसमर्धमासं वा चेष्टित्वा विनिवर्तते ।
विकारस्तु तदारब्धो नित्यं लशुनगन्धवत् ॥ ६५ ॥

कण्ठे मदः कोद्रवजो हृदि ताम्बूलजो मदः ।
लक्ष्मीमदस्तु सर्वाङ्गे पुत्रदारमुखेष्वपि ॥ ६६ ॥

यत्रासीदस्ति वा लक्ष्मीस्तत्रोन्मादः प्रवर्तताम् ।
कुलेऽप्यवतरत्येष कुष्ठापस्मारवत्कथम् ॥ ६७ ॥

अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान् ।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे ॥ ६

बिभर्तु भृत्यान्धनिको दत्तां वा देयमर्थिषु ।
यावद्याचकसाधर्म्यं तावल्लोको न मृष्यति ॥ ६९ ॥

धनभारो हि लोकस्य पिशुनैरेव धार्यते ।
कथं ते तं लघूकर्तुं यतन्तेऽपरथा स्वतः ॥ ७० ॥

अमानुरूपं पिशुने किमुपक्रियते नृपैः ।
द्विगुणं त्रिगुणं चैव कृतान्तो लालयिष्यति ॥ ७१ ॥

गोकर्णे भद्रकर्णे च जपो दुष्कर्मनाशनः ।
राजकर्णेजपः सद्यः सर्वकर्मविनाशनः ॥ ७२ ॥

न स्वार्थं किंचिदिच्छन्ति न प्रेर्यन्ते च केनचित् ।
परार्थेषु प्रवर्तन्ते शठाः सन्तश्च तुल्यवत् ॥ ७३ ॥

कालान्तरे ह्यनर्थाय गृध्रो गेहोपरि स्थितः ।
खलो गृहसमीपस्थः सद्योऽनर्थाय देहिनाम् ॥ ७४ ॥

शुष्कोपवासो धर्मेषु भैषज्येषु च लङ्घनम् ।
जपयज्ञश्च यज्ञेषु रोचते लोभशालिनाम् ॥ ७५ ॥

किं वक्ष्यतीति धनिको यावदुद्विजते मनः ।
किं प्रक्ष्यतीति लुब्धोऽपि तावदुद्विजते ततः ॥ ७६ ॥

सर्वमातिथ्यशास्त्रार्थं साक्षात्कुर्वन्ति लोभिनः ।
भिक्षाकबलमेकैकं ये हि पश्यन्ति मेरुवत् ॥ ७७ ॥

धनपालः पिशाचो हि दत्ते स्वामिन्युपस्थिते ।
धनलुब्धः पिशाचस्तु न कस्मैचन दित्सति ॥ ७८ ॥

दातारोऽर्थिभिरर्थ्यन्ते दातृभिः पुनरर्थिनः ।
कर्तृकर्मव्यतीहारादहो निम्नोन्नतं कियत् ॥ ७९ ॥

स्वस्मिन्नसति नार्थस्य रक्षकः संभवेदिति ।
निश्चित्यैव स्वयमपि भुङ्क्ते लुब्धः कथंचन ॥ ८० ॥

प्रस्थास्यमानः प्रविशेत्प्रतिष्ठेन दिने दिने ।
विचित्रानुल्लिखेद्विघ्नांस्तिष्ठासुरतिथिश्चिरम् ॥ ८१ ॥

प्रदीयते विदुष्येकं कवौ दश नटे शतम् ।
सहस्रं दाम्भिके लोके श्रोत्रिये तु न किंचन ॥ ८२ ॥

घटकं सम्यगाराध्य वैराग्यं परमं वहेत् ।
तावदर्थाः प्रसिध्यन्ति यावच्चापलमावृतम् ॥ ८३ ॥

एकतः सर्वशास्त्राणि तुलसीकाष्ठमेकतः ।
वक्तव्यं किंचिदित्युक्तं वस्तुतस्तुलसी परा ॥ ८४ ॥

विस्मृतं वाहटेनेदं तुलस्याः पठता गुणान् ।
विश्वसंमोहिनी वित्तदायिनीति गुणद्वयम् ॥ ८५ ॥

कौपीनं भसितालेपो दर्भा रुद्राक्षमालिका ।
मौनमेकासिका चेति मूर्खसंजीवनानि षट् ॥ ८६ ॥

वासः पुण्येषु तीर्थेषु प्रसिद्धश्च मृतो गुरुः ।
अध्यापनावृत्तयश्च कीर्तनीया धनार्थिभिः ॥ ८७ ॥

मन्त्रभ्रंशे संप्रदायः प्रयोगश्च्युतसंस्कृतौ ।
देशधर्मस्त्वनाचारे पृच्छतां सिद्धमुत्तरम् ॥ ८८ ॥

यथा जानन्ति बहवो यथा वक्ष्यन्ति दातरि ।
तथा धर्मं चरेत्सर्वं न वृथा किंचिदाचरेत् ॥ ८९ ॥

सदा जपपटो हस्ते मध्ये मध्येऽक्षिमीलनम् ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः ॥ ९० ॥

आमध्याह्नं नदीवासः समाजे देवतार्चनम् ।
सततं शुचिवेषश्चेत्येतद्दम्भस्य जीवितम् ॥ ९१ ॥

तावद्दीर्घं नित्यकर्म यावत्स्याद्द्रष्टृमेलनम् ।
तावत्संक्षिप्यते सर्वं यावद्द्रष्टा न विद्यते ॥ ९२ ॥

आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ।
किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥ ९३ ॥

दण्ड्यमाना विकुर्वन्ति लाल्यमानास्ततस्तराम् ।
दुर्जनानामतो न्याय्यं दूरादेव विसर्जनम् ॥ ९४ ॥

अदानमीषद्दानं च किंचित्कोपाय दुर्धियाम् ।
संपूर्णदानं प्रकृतिर्विरामो वैरकारणम् ॥ ९५ ॥

ज्यायानमस्तवो दुष्टैरीष्यायै संस्तवः पुनः ।
अपत्यसंबन्धविधिस्त्वनर्थायैव केवलम् ॥ ९६ ॥

ज्ञातेयं ज्ञानहीनत्वं पिशुनत्वं दरिद्रता ।
मिलन्ति यदि चत्वारि तद्दिशेऽपि नमो नमः ॥ ९७ ॥

परच्छिद्रेषु हृदयं परवार्तासु च श्रवः ।
परमर्मसु वाचं च खलानामसृजद्विधिः ॥ ९८ ॥

विषेण पुच्छलग्नेन वृश्चिकः प्राणिनामिव ।
कलिना दशमांशेन सर्वः कालोऽपि दारुणः ॥ ९९ ॥

यत्र भार्यागिरो वेदा यत्र धर्मोऽर्थसाधनम् ।
यत्र स्वप्रतिभा मानं तस्मै श्रीकलये नमः ॥ १०० ॥

काममस्तु जगत्सर्वं कालस्यास्य वशंवदम् ।
कालकालं प्रपन्नानां कालः किं नः करिष्यति ॥ १०१ ॥

कविना नीलकण्ठेन कलेरेतद्विडम्बनम् ।
रचितं विदुषां प्रीत्यै राजास्थानानुमोदनम् ॥ १०२ ॥

इति कलिविडम्बनं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ सभारञ्जनशतकम् ॥

---

षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥ १ ॥

सन्ति सर्वविधा मर्त्या न सन्त्येके विपश्चितः ।
असूर्येणेव लोकेन किं तेन विषयेण नः ॥ २ ॥

उद्यन्तु शतमादित्या उद्यन्तु शतामिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥ ३ ॥

बहुभ्यो बहु बोद्धव्यं बहुधा बहुवासरान् ।
बहुकल्पशतस्थायि लब्धुं बहुविधं यशः ॥ ४ ॥

पाषाणाः सर्व एवैते पद्मरागेषु को गुणः ।
प्रकाशः कश्चिदत्रास्ति परत्र स न विद्यते ॥ ५ ॥

जात्यन्धा जातिबधिरा जातिमूकाश्च ते जनाः ।
सम्यगाराधिता यैर्न सन्तो विज्ञानसिन्धवः ॥ ६ ॥

अपि मानुष्यकं लब्ध्वा भवन्ति ज्ञानिनो न ये ।
पशुतैव वरं तेषां प्रत्यवायाप्रवर्तनात् ॥ ७ ॥

किं परोक्षं किमध्यक्षं किं लभ्यं किं नु दुर्लभम् ।
सर्वमैन्द्रियिकं वस्तु सर्वं करगतं सताम् ॥ ८ ॥

स्थावरा जङ्गमा मर्त्या ब्राह्मणा मुनयः सुराः ।
शिव इत्यप्यमी भेदाश्चिदुत्कर्षनिबन्धनाः ॥ ९ ॥

विद्युज्जलधरो वृष्टिश्चन्द्रार्कौ सागरा इति ।
सर्वमद्भुतमज्ञानां जानतां तु न किंचन ॥ १० ॥

तत्र तत्र स्थितैर्ज्ञानकरणैरिव विग्रहः ।
विद्वद्भिः शोभते देशस्तैर्विहीनस्त्वमङ्गलः ॥ ११ ॥

अमलीमसमच्छिद्रमक्रेयमतिसुन्दरम् ।
अदेयमप्रतिग्राह्यमहो ज्ञानं महाधनम् ॥ १२ ॥

संदर्भशक्तिहीनानां शब्दाभ्यासो वृथाश्रमः ।
मुग्धानि लब्ध्वा पुष्पाणि मुण्डितः किं करिष्यति ॥

शास्त्रेषु दुर्ग्रहोऽप्यर्थः स्वदते कविसूक्तिषु ।
दृश्यं करगतं रत्नं दारुणं फणिमूर्धनि ॥ १४ ॥

आनृशंस्यं व्यवहाराणामार्जवं परमं धियाम् ।
स्वातन्त्र्यमपि तन्त्रेषु सूते काव्यपरिश्रमः ॥ १५ ॥

साहित्यविद्याहीनानां सर्वशास्त्रविदामपि ।
समाजं परिपश्यन्ति समजं बुद्धिशालिनः ॥ १६ ॥

अशिक्षितानां काव्येषु शास्त्राभ्यासो निरर्थकः ।
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ॥ १७ ॥

अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता ।
बधिरा गायकैर्हीना सभा भवति भूभृताम् ॥ १८ ॥

साहित्यादपि शास्त्राणि विशिष्टानीति चेन्मतिः ।
ततोऽपि वेदाध्ययनं ततोऽपि शिवकीर्तनम् ॥ १९ ॥

सन्त्वश्वाः सन्तु मातङ्गाः सन्तु योधाः सहस्रशः ।
नरेन्द्राणां विशेषेण न विना कविना यशः ॥ २० ॥

काणाः कमलपत्राक्षाः कदर्याः कल्पशाखिनः ।
कातरा विक्रमादित्याः कविदृग्गोचरं गताः ॥ २१ ॥

पादद्वयं वृथा दारस्य पञ्चानामेकदारता ।
पाण्डवानामभूत्कीर्त्यै पाराशर्यकवेर्गिरा ॥ २२ ॥

जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः ।
जानीते यन्न भर्गोऽपि तज्जानाति कविः स्वयम् ॥ २३

सर्वासामपि विद्यानां साहित्यं हि कवेः पदम् ।
साधारण्येऽपि यत्रैव सारस्वतपदं ध्रुवम् ॥ २४ ॥

नादातव्यं न दातव्यं न कर्तव्यं च किंचन ।
सान्त्वमेकं प्रयोक्तव्यं सर्वं तस्य वशे जगत् ॥ २५ ॥

नामरूपात्मकं विश्वं दृश्यते यदिदं द्विधा ।
तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्मुखः ॥ २६ ॥

अग्निष्टोमे किमुक्थ्ये किं किमाज्ये किं रथन्तरे ।
स्तुतिरित्येव हृष्यन्ति सर्वज्ञा अपि देवताः ॥ २७ ॥

न जातिरूपकर्माणि दृश्यन्ते मृदुभाषिणि ।
पक्षिणो मलिनास्तत्र परपुष्टा निदर्शनम् ॥ २८ ॥

अर्थहीनोऽपि मधुरः शब्दो लोकप्रियंकरः ।
वीणावेणुमृदङ्गादीन्यत्रोदाहरणानि नः ॥ २९ ॥

जिघांसन्तोऽपि पशवो रुदन्तोऽपि स्तनंधयाः ।
घ्नन्तोऽपि रिपवो युद्धे वशमायान्ति सान्त्वतः ॥ ३० ॥

दातुः प्रतिग्रहीतुश्च यौ हस्तावुत्तराधरौ ।
तयोरप्यौत्तराधर्यं ताभ्यामेवोपपद्यते ॥ ३१ ॥

अमर्त्याः सन्तु मर्त्या वा चेतनाः सन्त्वचेतनाः ।
दानमेव पुरस्कृत्य स्तूयन्ते भुवनैस्त्रिभिः ॥ ३२ ॥

देयद्रव्यमियत्ता वा दानोत्कर्षे न कारणम् ।
किं त्ववच्छेदराहित्यं धनदाम्बुदयोरिव ॥ ३३ ॥

ददातिराददातिश्च द्वावेतौ परमाद्भुतौ ।
ययोः स्वाम्यं च दास्यं च लीलामात्रविजृम्भितम् ॥

दोषा अपि गुणायन्ते दातारं समुपाश्रिताः ।
कालिमानं किलालम्ब्य कालमेघ इति स्तुतिः ॥ ३५ ॥

किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः ।
न लोभादधिको दोषो न दानादधिको गुणः ॥ ३६ ॥

अर्थाः साधारणा एव वियुज्यन्ते स्वभावतः ।
ममतां त्यजतां तेषु महदुत्पद्यते यशः ॥ ३७ ॥

मृतोऽप्यर्थं न मोक्ष्यामि बद्ध्वा नेष्यामि मूर्धनि ।
इति चेत्सुदृढो लोभः पात्रे देयमशङ्कितम् ॥ ३८ ॥

षष्टिर्देशान्तरे लभ्या शतं दत्त्वाऽत्र नैगमे ।
पात्रे त्वेकमिहोत्सृज्य परत्रानन्तमाप्यते ॥ ३९ ॥

को दत्ते क इवादत्ते स्वादृष्टं स्वेन भुज्यते ।
धीभेदमात्रे दातृत्वे क्लिश्यन्ते कृपणाः कियत् ॥ ४० ॥

स्वातन्त्र्यं यदि चोरेषु भोक्तृत्वं यदि बन्धुषु ।
निष्कर्षे तु भ्रमः स्वाम्यं तत्त्यक्त्वा लभ्यतां यशः ॥

न धैर्येण विना लक्ष्मीर्न शौर्येण विना जयः ।
न ज्ञानेन विना मोक्षो न दानेन विना यशः ॥ ४२ ॥

स्वकीयान्भुञ्जते मत्स्याः स्वापत्यानि फणाधराः ।
बलाबलव्यवस्थेयं बलिनस्त्वकुतोभयाः ॥ ४३ ॥

गुरुं हत्वा दिवं याति तृणं छित्त्वा पतत्यधः ।
बलिनां दुर्बलानां च श्रुतयोऽपि द्विधा स्थिताः ॥ ४४ ॥

बलिनो बलिनः स्निह्यन्त्यबलं तु निगृह्णते ।
दावं दीपयते चण्डो दीपं व्याहन्ति मारुतः ॥ ४५ ॥

साधका अपि लोकानां बलिनो बिभ्रति स्वयम् ।
सर्वं बलवतां पथ्यं भिषग्भिरभिधीयते ॥ ४६ ॥

शुभप्रारब्धलब्धापि लक्ष्मीः शौर्यविवर्जिता ।
शोकेन दह्यमानास्ते षण्डे कुलवधूरिव ॥ ४७ ॥

सर्वत्र लाल्यते शूरो भीरुः सर्वत्र हन्यते ।
पश्यन्ते केवला मेषाः पूज्यन्ते युद्धदुर्मदाः ॥ ४८ ॥

भार्यायाः सुन्दरः स्निग्धो वेश्यायाः सुन्दरो धनी ।
श्रीदेव्याः सुन्दरः शूरो भारत्याः सुन्दरः सुधीः ॥ ४९ ॥

न शौर्यं शौर्यमित्येव स्तूयते बुद्धिशालिभिः ।
किं तु नीत्या समाश्लिष्टं वाग्मित्वमिव मेधया ॥ ५० ॥

शौर्येण लोकश्रेष्ठ्यत्वं शौर्येण क्षितिपालता ।
शौर्येण लभ्यः स्वर्गोऽपि शौर्यं कस्य न साधनम् ॥ ५१ ॥

समरेषु नरेन्द्राणां सवनेषु द्विजन्मनाम् ।
प्रतिकर्मसु नारीणां शौर्यं भवति भूषणम् ॥ ५२ ॥

शौर्ये तुल्ये कथं वृत्तं स्वामी दास इति द्विधा ।
अन्वयव्यतिरेकाभ्यां नीतेरित्यवधार्यताम् ॥ ५३ ॥

न जयाय स्वतः शौर्यं किं तु नीत्योपबृंहितम् ।
प्रयुक्तं हि जयत्यस्त्रं प्रयोक्त्रा न स्वतः क्वचित् ॥ ५४ ॥

इदमेव परं शौर्यमुपायैस्त्रिभिरन्वितम ।
इदमेव परं मौर्ख्यमुपायैस्त्रिभिरुज्झितम् ॥ ५५ ॥

पराक्रमन्ते युद्धेषु सममेवोभये भटाः ।
विजयन्तेऽप्युपायज्ञा विजीयन्ते तदुज्झिताः ॥ ५६ ॥

किं शास्त्रैर्बहुधाऽभ्यस्तैः किं चातुर्येण किं धिया ।
किं शौर्येणानिवार्येण ललाटे चेन्न लिख्यते ॥ ५७ ॥

घटमानाः कुटुम्बेषु दरिद्रति विपश्चितः ।
मूढेषु रमते लक्ष्मीरहो दिष्टस्य चेष्टितम् ॥ ५८ ॥

तुल्यं कर्षन्ति पृथिवीं तुल्यं शास्त्राण्यधीयते ।
उन्मज्जन्ति निमज्जन्ति दैवस्यैकस्य चेष्टया ॥ ५९ ॥

लुभ्यन्ति वितरन्तोऽपि कुप्यन्ति सरला अपि ।
मुह्यन्ति मतिमन्तोऽपि भोक्तुर्भाग्यविपर्ययात् ॥ ६०

अधीयते विजानन्ति विरज्यन्ति मुहुर्मुहुः ।
नात्यन्ताय निवर्तन्ते नरा वैषम्यतो विधेः ॥ ६१ ॥

दोहदैरालवालैश्च कियद्वृक्षानुपास्महे ।
ते तु कालं प्रतीक्षन्ते फलपुष्पसमुद्गमे ॥ ६२ ॥

कः प्रसूते पुरोवातं कः प्रेरयति वारिदम् ।
प्राप्ते तु श्रावणे मासि भवत्येकार्णवं जगत् ॥ ६३ ॥

कालः करोति कार्याणि काल एव विहन्ति च ।
करोमीति विहन्मीति मूर्खो मुह्यति केवलम् ॥ ६४ ॥

अपि कालस्य यः कालः सोऽपि कालमपेक्षते ।
कर्तुं जगन्ति हर्तुं वा कालस्तेन जगत्प्रभुः ॥ ६५ ॥

कालः सदागतिरपि स्थायीव परिचेष्टते ।
चण्डमारुतवद्विश्वमधरोत्तरयन्क्षणात् ॥ ६६ ॥

कालश्चालयति प्रायः पण्डितान्पामरानपि ।
तं चेद्वशीकीर्षसि वशे तितिक्षैव महौषधम् ॥ ६७ ॥

रन्ध्रेषु प्रहरिष्यन्तः कति कामादयोऽरयः ।
क्षणान्नश्यति लोकोऽयं क्षमा चेन्न नियच्छति ॥ ६८

अपकारपराणामप्युपकुर्वन्ति साधवः ।
छिन्दन्तमपि वृक्षः स्वच्छायया किं न रक्षति ॥ ६९

क्षमस्येव सदा ज्ञानं क्षमस्येव सदा तपः ।
छिद्रं छिद्रमनुप्राप्य न चेच्छादयति क्षमा ॥ ७० ॥

क्षमां रक्षन्ति ये यत्नात्क्षमां रक्षन्ति ते चिरम् ।
क्षमास्ते निभृता येषु क्षमास्ते सर्वकर्मसु ॥ ७१ ॥

मूर्खाः शमयितुं दुःखं संरभन्ते ततस्ततः ।
क्षमयैव निगृह्णन्ति धीराः संरम्भवर्जिताः ॥ ७२ ॥

आ काल्यादा निशीथाच्च कुक्ष्यर्थं व्याप्रियामहे ।
न च निर्वृणुमो जातु शान्तास्तु सुखमासते ॥ ७३ ॥

नायास्यन्ते शरीराणि न दैन्यमवबुध्यते ।
संभवत्यपि चानन्दः शान्तिमभ्यस्यतां सताम् ॥ ७४ ॥

प्रसीदत्यपरिस्पन्दि पयः कलुषितं यथा ।
तथा शान्तमपि स्वान्तं प्रसीदति शनैः शनैः ॥ ७५ ॥

यत्नेन महता लभ्या दासा द्विषाः सुखाय नः ।
शान्तस्य कालदष्टायाः शतं भृत्या अचेतनाः ॥ ७६ ॥

अपि सूक्ष्मया गिरा लभ्यः सदा जागर्त्यतन्द्रितः ।
नास्ति धर्मसमो भृत्यः किंचिदुक्तस्तु धावति ॥ ७७ ॥

अर्थेनोपार्ज्यते धर्मो धर्मेणार्थ उपार्ज्यते ।
अन्योन्याश्रयणं ह्येतदुभयोत्पत्तिसाधनम् ॥ ७८ ॥

विपणिः पुण्यतीर्थानि विक्रेतारस्त्वकिंचनाः ।
तृणेनाप्यन्ततो धर्मः पर्वसु क्रीयते महान् ॥ ७९ ॥

चुलुकोदकमात्रेण धान्यमुष्टिद्वयेन च ।
मरुभूमिषु दुर्भिक्षे धर्मसत्यं महाफलम् ॥ ८० ॥

धर्मो नर्मसखः कामे गुरुस्तत्त्वोपदेशने ।
भटः संगररङ्गेषु सचिवोऽर्थसमार्जने ॥ ८१ ॥

भुवि वृक्षा दिवि च्छाया भुवि कूपो जलं दिवि ।
भुवि यद्दीयते विप्रैर्दिवि तद्दीयते सुरैः ॥ ८२ ॥

कदलीकंदवद्धर्मो न रोहति बहिर्गतः ।
छादितस्तु फलं चारु सूते पनसमूलवत् ॥ ८३ ॥

दुःखेनोपार्ज्यते धर्मः सुखेन तु विनश्यति ।
कृच्छ्रलब्धममुं त्रातुं नेच्छन्ति मुनयः सुखम् ॥ ८४ ॥

संपाद्यतां वा यत्नेन यद्वा विक्रीयतामयम् ।
सर्वदा मुच्यतां वान्यैर्धर्मो भवति नान्यथा ॥ ८५ ॥

अर्थवन्तः प्रशस्यन्ते निन्द्यन्ते तद्विनाकृताः ।
आगमेष्वपि चेदेवमद्भुतं किं शरीरिषु ॥ ८६ ॥

अर्थोऽप्यर्थेन चेत्साध्यः का वार्ता धर्मकामयोः ।
अर्थः सर्वजगन्मूलमनर्थोऽर्थविपर्ययः ॥ ८७ ॥

कर्म ज्ञानं च मोक्षाय कर्मण्यर्थोऽधिकारिता ।
अतोऽर्थेनैव कैवल्यं न कैवल्येन लभ्यते ॥ ८८ ॥

कथमर्थं निषेधन्तु श्रुतयः स्मृतयोऽपि वा ।
यासामेकं पदमपि न चलत्यर्थतो विना ॥ ८९ ॥

लक्ष्मीश इति गोविन्दो मेरुधन्वेति शंकरः ।
हिरण्यगर्भ इत्येव ब्रह्मापि बहुमन्यते ॥ ९० ॥

ऊर्ध्वं गच्छन्ति यं त्यक्त्वा यं गृहीत्वा पतन्त्यधः
तस्य गौरवमर्थस्य तावतैवानुमीयताम् ॥ ९१ ॥

गृहिणा यदि लभ्येत गृहिणी हृदयंगमा ।
संसार इति को भारस्तं सारमनुपश्यतः ॥ ९२ ॥

आहुत्य चिनुमः स्वर्गमपवर्गमपि क्रमात् ।
अनुकूले हि दांपत्ये प्रतिकूले न किंचन ॥ ९३ ॥

गृहिणीवृत्तदोषेण गौतमोऽत्यन्ततापितः ।
आतस्थे दुःखविध्वंसं कैवल्यं परमं मुनिः ॥ ९४

अपि यत्परमं तत्त्वमर्धेन्दुकृतशेखरम् ।
तस्यापि तावानानन्दः किमस्मज्जननीं विना ॥ ९५

निन्दन्ति च प्रशंसन्ति निगमा यद्गृहाश्रमम् ।
दांपत्यसाम्यवैषम्यभेदादेतद्व्यवस्थितिः ॥ ९६ ॥

इन्द्रियाण्यनुपक्रुश्य लभ्यं श्रेयो गृहाश्रमे ।
अतस्तुर्याश्रमं प्राहुरबाधन्यायबाधितम् ॥ ९७ ॥

भुज्यते यत्सुखं धीरैरप्रमत्तैर्गृहाश्रमे ।
स्वर्गस्तस्याङ्गसंपूर्तिरपवर्गोऽस्य नित्यता ॥ ९८ ॥

दृष्टदोषोऽपि गार्हस्थ्ये दूरदर्शितया स्वयम् ।
गार्हस्थ्यमेव परमं मेने नैयायिको मुनिः ॥ ९९ ॥

उच्चावचं जगद्गार्हस्थ्यमेकदेव निषेधति ।
अविद्यमानो नृपतिः प्रपञ्चमिव न श्रुतिः ॥ १०० ।

न राजानं विना राज्यं बलवत्स्वपि मन्त्रिषु ।
प्राणेष्वसत्सु किं देहश्चण्डवातेन धार्यते ॥ १०१ ॥

मातुः किंचित्पितुः किंचिदाचार्यात्किंचिदात्मतः ।
सम्यग्विनीताच्छात्रेषु सर्वं राज्ञस्तु लभ्यते ॥ १०२ ॥

चलन्ति सर्वमर्यादाः स्खलिते सति पार्थिवे ।
पर्वता अपि कम्पन्ते प्रसक्ते कम्पने भुवः ॥ १०३ ॥

पत्न्या माङ्गल्ययोगेन पत्युरायुः प्रवर्धते ।
प्रकृतीनां तु भाग्येन पार्थिवः सुखमेधते ॥ १०४ ॥

निर्मितं शतकं साग्रं नीलकण्ठेन यज्वना ।
सभारञ्जनमेतेन साधयन्तु मनीषिणः ॥ १०५ ॥

इति श्रीनीलकण्ठदीक्षितविरचितं

सभारञ्जनशतकं संपूर्णम् ॥

॥ श्रीः ॥

# ॥ अन्यापदेशशतकम् ॥

छायावृक्षमुपाश्रयन्ति पथिषु श्रान्ता हि पान्थाः समं
तेष्वेकोऽस्य शुभं शुभेन मनसा हृष्यन्ननुध्यायति ।
अन्यो भङ्गमपेक्षतेऽस्य विटपानाधारयष्टेः कृते
कश्चिन्निश्चिनुते कवाटफलकं कर्तुं तमेव क्षणात् ॥ १ ॥

श्वानः सन्त्यभितोऽपि दन्तमुकुलव्यावर्तनोत्पाटित-
स्वैरोत्तानितविड्वराहपृथुकाः किं तैः स्थितैर्वा मृतैः ।
वस्तव्यं गिरिराजमौलिषु विहर्तव्यं पुनः स्वेच्छया
हन्तव्याः करिणो मृगेन्द्र इति च प्राप्तव्यमुच्चैर्यशः ॥

किं पुष्णासि मृगान्मृगादनकुलात्किं वा परित्रायसे
स्वभाग्येन तथाप्यमी वनभुवि स्वैरं चरित्वा तृणम् ।
त्वां राजानमुपासितुं यदि किल श्रद्धां निबध्नन्ति त-
त्किं पारीन्द्र गुहागृहादपि विनिर्गन्तुं तवैष श्रमः ॥ ३ ॥

उन्मुच्य स्वजनाननुपेक्ष्य तृणवत्प्राणानपि प्रेयस-
स्तीर्त्वा दुस्तरमर्णवं च वणिजः प्राप्ताः पटीराशया ।
श्वासैस्ते विनिवर्तिताः प्रतिभयैः स्वस्थो भवान् तः परं
त्वं वा केवलमङ्गमङ्गमुरग व्यालिम्प गन्धद्रवैः ॥ ४ ॥

भ्रान्त्वा दिग्वलभीर्विचित्य विपिनान्यासाद्य दैवादिह
क्वापि क्वापि मुखेन केवलमथैकैकां शलाकां हरन् ।
कृत्वा नीडकुटीं चिरात्तरुशिरस्यध्यास्त यावन्न तां
काकस्तावदहो तदेव विपिनं दग्धं दवज्वालया ॥ ५ ॥

नाम्भोजाय शशी न चापि शशिने यद्रोचतेऽम्भोरुहं
किं तेन क्षतमस्ति किंचन जगत्येतस्य वा तस्य वा ।
लोकानन्दकयोः परं त्विह तयोः प्रेम्णैव भाव्यं मिथ-
स्तच्चेन्नार्जनि तत्प्ररूढमयशः स्फारं विधेः केवलम् ॥६॥

अस्तप्रत्युपकारगन्धमकृतस्वप्रार्थनापेक्षम-
प्यम्भोभिर्भुवमार्द्रयन्ति जलदा जीवन्त्यतो जन्तवः ।
दैवज्ञः पुनरस्ति वृष्टिरिति वागेका मयोक्तेति य-
द्विभ्रं क्रीतमिवाधिगच्छति तदेवाघूर्णते मर्माणि ॥ ७ ॥

अस्ति स्वादु फलं किमस्ति किमथ घ्रातुं क्षमः कोरक-
स्त्वद्विश्राम्यतु नाम भोक्तुमुचितं पत्रं किमस्त्यन्ततः ।
येभ्यो हन्त यदीदृशोऽपि मनुजैर्वृक्षाधमः पिप्पलो
दुःस्वातन्त्र्यमिदं विधेः कथयतः कस्याग्रतो रुद्यताम् ।

सर्वासां सरितां पतिर्यदि यदि व्याप्ताः समस्ता दिशः
कल्पान्तेष्वपि वा न शुष्यति यदि स्वैरं तदङ्गीकृतम् ।
अम्भः स्वादु पिपासतः पथि परिश्रान्तस्य पान्थस्य किं
तेन स्यात्फलमर्णवोऽयमिति येदिन्दुमहे स्तास्यते ॥

स्थित्वा तीरभुवि प्रसार्य सरसि स्वैरं कराग्रं पयः
पातव्यं पिब तावता न विरमेद्धन्तीन्द्र किं ते तृषा ।
उन्मृद्नासि तटीरपः कलुषयस्युन्मूलयस्यब्जिनी-
र्हानिः कस्य तवैव मृग्यमुदकं भ्रातः पुनस्तृष्यतः ॥

को दोषः परतो गते मधुकरे क्षीवः किमेष त्वया
क्षीतेनापि किमास्यते क्वचिदिह ग्लानोदरेण क्षणम् ।
जानास्येवमथापि येक्षिपसि तं कर्णानिलैर्दूरतो
दुर्धर्षोऽसि निरङ्कुशोऽसि भवतो मत्तेभ वक्तैव कः ॥

नेतव्यः समयः कियानिव सखे काक त्वया भ्राम्यता
हंसीभूय सुखेन भुङ्क्ष्व नलिनीनालानि पद्माकरे ।
व्यावर्त्यमिहास्ति किं विमलता किंचित्तु कार्या तनो-
र्हंसत्वे यदि ते जनो विवदते दण्ड्योऽहमस्म्यग्रतः ॥

किं त्वं दोहदमीहसे किमुदकैः सिक्तोऽसि किं केनचि-
द्दृष्टस्ते सकृदालवालवलयः किं ते मही संस्कृता ।
द्विश्रिः पुष्यसि वासरस्य न गुणान्धुत्तूर ते निह्नुवे
दुर्गन्धो न भवेदियान्यदि ततस्त्वं पारिजातोऽसि नः ॥

गन्तव्यं जलमध्य एव गतवन्मन्तव्यमेतद्वपुः
क्षन्तव्या लवणानिला इति कृतं निर्विघ्न सांयात्रिक ।
अन्तर्वेश्मनि हंसतूलशयने सुप्त्वा सुखं जाग्रतो
हस्ताग्रे धनमेष्यति स्वयमिति भ्रातः किमास्ते हृदि ॥

आसीनः सुखमापणे यदि वणिक्श्रद्धालुभिः प्रार्थितः
किंचिच्छंसति पञ्चकं शतकमित्येतन्न तस्याद्भुतम् ।
आपातालविघूर्णिताम्भसि चलत्यौत्पातिके मारुते
मज्जन्त्यामपि नावि मुञ्चति न यस्तामेव मूल्यस्थितिम् ॥

विद्धं मर्मसु येन येन गरलोन्मिश्रा गिरः श्राविता
जज्वाल ज्वलनाख्यवाग्निरिह निशि क्रूरैः करैर्यः सदा ।
सर्वे ते सुहृदो बभूवुरधुना सङ्गे मिथः कामिनो-
दौर्जन्यस्य विभावनात्परिणतौ दूती परं दूषिता ॥

संनद्धेषु पयोधरेषु चलिते मन्दं पुरोमारुते
कादम्बैः कमलाभिमानिभिरपि त्यक्त्वा सरः प्रस्थिते
मिथ्यारोपितपौरुषैर्मधुकरैर्मुग्धैर्यदध्यासितं
तस्येदं फलमम्भसा प्रवहता सैवाब्जिनी मज्जिता ॥

संत्यक्ता यदि केतकी त्रिभुवनश्लाघ्या पुरद्रोहिणा
तस्मिन्नेव हि पर्यवस्यति ततो वस्तुष्वसारज्ञता ।
किं वेणीषु न तां वहन्ति सुदृशः किं सा न विक्रीयते
किं नेमामुपलालयन्ति रसिकाः पृथ्वीभुजो मौलिभिः

कोणे क्वाप्यवतीर्य गात्रमभितः सिक्त्वा पयःशीकरै-
रास्वाद्योदकमागतोऽस्मि पुनरित्यास्ते गजस्याशये ।
कासारस्य दशा त्वसौ कलुषितान्यम्भांसि भग्नास्तटाः
प्रध्वस्ता नलिनी किमत्र बहुना स्वातन्त्र्यमास्ते पुनः

द्यौरित्थं क्षितिरित्थमित्थमुदधेर्मुद्रेति कृत्वा स्थितिं
विश्वस्याहनि विश्रमाय शयितुं प्रारम्भि धात्रा यदा ।
दग्धं चण्डकरैस्तदेव पवनैरौत्पातिकैः शोषितं
मेघैः प्लावितमङ्कुरैरपि जगत्स्रष्टव्यमासीत्पुनः ॥ २० ।

स्वस्ति स्वागतमास्यते सुखममी जाताः कुतः पल्लवाः
हन्तासन्कुसुमान्यपीह किमतो माध्वी च तत्रेक्ष्यते ।
किं भृङ्गा अपि सन्ति साधु शिरसि न्यस्तं पदं शाखिनां
धुत्तूरास्ति न दुर्लभं किमपि ते यावद्वसन्तः सुखी ॥

दृष्टाश्चन्द्रसमुद्गमाः शतमतिक्रान्ताः शतं प्रावृषः
सीमामेष न जात्वलङ्घत किलेत्यब्धिर्न विश्वस्यताम् ।
योऽसौ शेत इवायमेव विधिना वामेन चेच्चाल्यते
का सीमेति तदास्ति के जनपदाः का मेदिनी का दिशः

सर्वत्र स्रवतोऽस्य किंचिदुदकं दिष्टया मुहूर्ते क्वचि-
च्छुक्तीनामुदरेषु मौक्तिकमभूत्काले कदाचित्किल ।
अद्यत्वेऽपि तथा करोतु पटुता यद्यस्ति तद्दूरतः
शुष्कैरेव तु गर्जितैर्व्यथयति श्रोत्राणि धाराधरः ॥

आयुस्ते कियदस्ति तत्र च कियत्तारुण्यमत्रापि त्व-
त्वर्धं निर्गलितं निशात्मकतया यत्रास्ति सङ्गो न ते ।
शेषाः सन्ति कति क्षणाः प्रणयजस्तत्रापि कोपो यदि
व्यर्थं निश्चिनु चक्रवाकि जननं कस्ते हितं वक्ष्यति ॥

सर्वेषां विदिताः सुधाकरकराः साक्षात्सुधारूपिणः
संदेहोऽपि न तद्भुजः सुमनसो जाता अमर्त्या इति ।
तानेव ह्युपभुञ्जते प्रतिनिशं दीनाश्चकोरा इमे
क्षीयन्ते तृणवच्च को नु गहनां जानातु धातुर्गतिम् ॥

अर्चामः सततं गणाधिपमथाप्याखूभिहन्मः शतं
ध्यायामो हृदि भैरवं तदपि तु प्रोत्सारयामः शुनः ।
भूतेशं प्रणुमस्तथापि शतशो भूताभिगृह्णीमहे
न ह्येकस्य गुणः परस्य महतो दोषानपि प्रोर्णुते ॥

अन्तः क्षोभकृतः कतीह तिमयः कत्युच्छ्रिताः पर्वताः
कीदृक्चान्तरबिन्धनो हुतवहः कीदृक्च नौकागतिः ।
आगच्छत्प्रतिगच्छदुच्चलदुपाश्लिष्यत्प्रधावत्पत-
त्कल्लोलारभटीभिरेव जलधेः सर्वं तदाच्छाद्यते ॥ १७

जामाता कमलाक्ष एव गृहिणी गङ्गा जगत्पावनी
शीतांशुप्रमुखाः सुता भगवती श्रीरेव कन्या स्वयम् ।
इत्थं गृहमेधिता त्रिभुवनाधारस्य वारांनिधे
कः शक्नोति जनो मनोरथपथेऽप्येतावदुत्प्रेक्षितुम् ॥

यन्मूले निखिलागमानुपदिशत्तत्त्वं परं शांकरं
यत्पर्णे जगतां निधिः स तु वटो नाम्नापि न स्वीकृतः ।
यच्छाखानिलयः पिशाचनिचयो यन्मूलगाः पन्नगा-
स्तस्याश्वत्थतरोः पुनः कति नमस्काराः कति प्रार्थनाः ॥

आगच्छन्त्यवगुण्ठयन्त्यथ पुनः पश्यन्ति जिघ्रन्ति च
स्वारब्धं मधु मक्षिका न कणमप्यस्य स्वयं भुञ्जते ।
अन्यस्त्वन्य उपेत्य निर्दयममूरुत्सारयन्दूरतः
स्वादं स्वादमिदं स्वसंभृतमिव स्वच्छन्दमानन्दति ॥

आसन्नो मधुरागतं वनभुवः साम्राज्यमित्यद्भुताः
श्रूयन्ते गिर एव तत्त्वमिह तु ज्ञातुं विधातुः क्षमम् ।
यत्पर्णैस्त्रुटितं यदप्युपरतं पुष्पोद्गमैः शाखिनां
यद्ग्लानं विटपैरिदं पुनरिह प्रत्यक्षमालक्ष्यते ॥ ३१ ॥

उत्सन्नो मधुरास्ति कोकिलरवैरुत्सन्नमस्त्येतद-
  प्युत्सन्नं मलयानिलैरिदमपि प्रागेव जानीमहे ।
पान्थास्तुष्यथ तावतैव किमिति भ्रान्ता यदि प्राणिति
  स्तोकेनापि मनोभवो गलतु वः प्राणेषु शुष्को ग्रहः ॥

तिक्तास्ते विटपास्त्वचो यदि ततस्तिक्तास्ततोऽपि च्छदा-
  स्तेभ्योऽपि प्रसवास्ततोऽपि च फलान्येवं न दृष्टं क्वचित् ।
स्तौमि त्वामथ वा न निम्ब भवतोऽप्यासीद्यतः संभवः
  श्रीमत्तत्किल निम्बबीजमवनौ स्तुत्यं वचःशालिनाम् ॥

चूताः पल्लवमुद्गिरन्ति वितरन्त्येतत्पिकेभ्यस्तत-
  स्तेऽप्येतेन कुहूः कुहूरिति कलं कुर्वन्ति कूजामिति ।
निम्बोऽपि स्वयमुद्गिरन्फलमनेनाराधयन्वायसा-
  न्किंचित्तेषु ततो रटत्सु सफलं जन्म स्वकं मन्यते ॥

भोज्यं स्वादु पयः स्थितिर्मणिगणैरापिञ्जरे पञ्जरे
  दूरे चिन्तयितुं च दंशमशकाः पारे गिरां लालनम् ।
सत्यं सर्वमथापि काननभुवि स्वाच्छन्द्यमव्याहतं
  ध्यायन्ती विमना मनागपि शुकी नालम्बते निर्वृतिम् ।

प्राङ्मेघैः कियदम्बु पीतमुदधेः पीतेऽपि वृष्टं किय-
दृष्टे चापि कियत्प्रलीनमवनौ पीतं कियत्प्राणिभिः ।
नेदं कश्चन वेद यत्तु किमपि प्रापावशिष्टं पुन-
र्घर्मान्ते सरितां मुखेन तदभूदीर्ष्यास्पदं पश्यताम् ॥

मेघं द्वारतया विधाय भुवनान्याप्लावयस्यम्भसा
चन्द्रं द्वारतया विधाय सवितः पुष्णासि सर्वौषधीः ।
यत्त्वीषत्तपसीव तत्तु कुरुषे स्वेनैव तेनाधुना
धातृत्वं घनचन्द्रयोः परिणतं क्रौर्यं तु शिष्टं त्वयि ॥

द्वारं न प्रजहातु जातु नियतं जागर्तु रात्रीरपि
स्वल्पेनापि मुदं प्रयातु किमतः श्वा श्वैव तावानपि ।
संपाद्यो महता धनेन सततं भोज्यश्च सान्त्वैरिति
त्यक्त्वा मत्तगजं पदेऽस्य महतः स्थाप्यः किमेतावता

उत्पन्नाः सरितां ह्रदेषु सुचिरं तत्रैव पुष्टास्ततः
प्राप्ता प्रावृषि सागरं जलचरास्तासां मुखादेव ये ।
त्रिचैरेव दिनैस्तिमिंगिलकुलस्यासाद्य कूटस्थतां
मृष्यन्त्यद्य न ते रहस्यपि कृतां नादेयतासंकथाम् ॥

पन्थाः कर्दमितः पयः कलुषितं हंसाः कृता दूरतः
पीड्यन्ते च यदेवमर्थिन इति क्रूरारवैश्चातकाः ।
सोढाहे तव हे पयोद सकलं शक्नोषि दातुं स्वतः
किं त्वं शीकरमेकमप्युदधिना लोभो यदि स्वीकृतः ॥

सर्वज्ञो यदि शंकरो यदि महादेवो यदि प्रायशो
देवानामपि दैवतं यदि तदप्यास्तामिदं दूरतः ।
धुत्तूरैः फणिभिः कपालवलयैरन्यैश्च ते संगति-
श्चूडाचन्द्रकले न तावदुचिता याचे बहिर्गम्यताम् ॥

अस्यां प्रावृषि चातकैर्जलकणा लब्धा न चेत्किं ततो
भाविप्रावृषि दास्यते द्विगुणमित्यभ्र त्वया गम्यते ।
एतेऽद्यैव लयं व्रजन्ति पृथुकैरेतत्कुलीनोऽपि चे-
देकः प्राणिति तावदेव तदलं तत्रैव न संशयः ॥१२॥

वर्णस्तेऽतिमनोरमः शिरसि ते वासो मृडानीपतेः
प्रख्येतऽन्यतरं च काञ्चनमिति प्रौढं पुनर्नाम ते ।
किं कर्तव्यमितःपरं च भवता धुत्तूर लोकाः पुन-
र्न क्रीणन्ति न च स्पृशन्ति न च वा पश्यन्ति गन्धप्रियाः ।

राज्यं येन कृतं न तस्य शृणुमः कामस्य नामाधुना
येषामेव गिरः पुरा परभृतैस्तैरद्य मौनं धृतम् ।
व्याप्ता येन दिशो न सांप्रतमसौ मन्दानिलः स्पन्दते
किं ब्रूमोऽवतरन्निदाघहतको विश्वं नवं निर्ममे ॥ १४ ॥

पीयन्तां तमसा दिशो विदधतां नीचाः पिशाचाः स्मयं
व्याक्रोशन्तु शिवाः कियच्चिरमसौ कालः सखे स्थास्यति
अद्योदेष्यति भानुरेष्यति दिशमद्य प्रसादो मुखे-
ष्वद्य स्वां प्रकृतिं गमिष्यति मही कोक क्षणं क्षम्यताम् ।

मेघा इत्यवतीर्य केऽपि नभसः सर्वं पयो गृह्णते
यादांसीति समागतास्तत इतोऽप्यन्ये रमन्ते सुखम् ।
यस्तु स्वान्तिक एव तस्य महस्तालस्य कालाद्गुहोः
शुष्कस्यापि हि नोपयोगकणिकां पश्यामि तेनाब्धिना ॥

आक्रामन्तु तमेव चूतमपि च क्रोशन्तु रेफोत्तरं
डिम्भोऽस्माकमसीति वाभिदधतां काका वराकाः स्वयम् ।
गन्तव्यं क्व ततोऽन्यतः परभृत क्षन्तव्यमेतावद-
प्यग्रे कस्य निवेद्यतामिदमतिक्रान्तो वसन्तोऽधुना ॥

गन्तव्यं शिशिरेण नाम भवितव्यं नाम चूताङ्कुरै-
स्तानास्वाद्य पिकः करिष्यति तदा नाम स्वयं पञ्चमम्
आस्तामेष तथाविधस्त्वमसि किं काक स्वतन्त्रस्य ते
काकोऽयं स्वर एष भोज्यमिदमित्येषा कुतो यन्त्रणा ॥

काका मूर्ध्नि सुखं वसन्ति शतशः शाखासु शाखामृगा
घूकाः कोटरगह्वरेषु मशकैर्दंशैश्च सान्द्रं तलम् ।
आधारः कियतामसि स्थिरतरं शुद्धं च लब्धं यशः
पान्था नोपसरन्ति चेत्क्षतमितः किं वृक्षराजस्य ते ॥

स्निग्धश्यामलकोमलं दलमति प्रच्छायशीतं तलं
भूपर्यन्तविलम्बिजम्भलफलस्थूलं च वृत्तं फलम् ।
संपश्यन्विजने वने व्यवसितस्तत्रैव वस्तुं सुखं
पान्थः पान्थमुखाद्विषद्रुमममुं दैवादवेत्य द्रुतः ॥ ५०

वर्षन्त्वम्बुमुचस्तपन्तु तपना मथ्नन्तु देवासुरा
बध्नन्तु प्लवगाः पतन्तु सरितो गङ्गादिमाः सर्वतः ।
पुष्णातूत्पलबान्धवः प्रतिनिशं मुष्णातु वा बाडवो
नाब्धिः क्षुभ्यति न प्रसीदति ततो न क्षीयते नैधते

वापीकूपतडागपल्वलसरःस्रोतस्विनीसारणी-
तोयाभ्युद्गमनिर्झरह्रदजलाधारोदपानप्रपाः ।
संपन्ना उपजीव्य यस्य विभवं साक्षात्प्रणाल्यापि वा
तस्मै जीवन जीवनाय सरितामीशाय तुभ्यं नमः ॥

न ह्युष्णो न च शीतलो जलनिधिर्लब्धप्रतिष्ठोऽपि स-
न्कस्त्वस्याः प्रकृतेरमुं चलयितुं शक्तस्त्रिलोकेष्वपि ।
अद्यापि ज्वलतान्तरेव विहितं किं तावदौर्वाग्निना
सायं सायमुदित्वरेण शशिना तत्रैव वा किं कृतम् ।

राजा विप्रकुलस्य तस्य तनयः सोमः स वारांनिधे-
र्यः सर्वाश्रयणीयपादकमलस्तस्याश्रयोऽयं हरेः ।
आनीतश्चुलुकं स एव चलुकेऽप्यन्तः प्रवेश्येत चे-
त्कः संवेदितुमीहते भगवतः कालस्य लीलायितम् ॥

दुग्धं स्वादु रसादपीह मधुनो दग्धं विषैर्वासुकेः
संवर्तव्रतसाक्षिणो जलचरा मन्थाद्रिणा मारिताः ।
प्राणेभ्योऽप्यधिकाः सुरद्रुममुखाः प्राप्ताः समस्ता स्वयं
किंचिद्रक्षितुमिच्छतामृतमिह क्षीराब्धिना नाशितम्

लब्धा श्रीर्मुरवैरिणा पुरभिदा लब्धः स्वयं चन्द्रमा
देवैरप्सरसो मणिद्रिपहयास्तत्स्वामिनैवाहृताः ।
एकस्मै स्वयमेकमेव वितरत्येतेषु चेत्सागर-
स्त्रैलोक्यं वशयेज्जडस्तु स वृथा विक्रम्य तैर्लुण्ठितः ॥

कत्यश्वाः कति धेनवः कति गजाः कत्यद्भुताः पादपाः
सुन्दर्यः कति सुभ्रुवः कति महारत्नान्यनर्घाण्यपि ।
जातैका किल कन्यका जलनिधेरेतां तु प्रसक्ता यदा
सर्वं तत्प्रार्थितं तदा परिणतौ नामैकमुच्छेषितम् ॥ ५७ ॥

प्रागभ्यगतया किलाभ्रसरिता संप्लावयन्त्या मही-
मम्भोधिः स्वयमप्यपूर्यत सकृत्तत्तज्जलाधारवत् ।
आस्तेऽयं कथमक्षयो निधिरपां ते ते कथं वासते
निर्व्याजाम्बुधराम्बुदानसुकृतं सिद्धं तदित्थं पुनः ॥

खातं शीतलवारि वारिदकुलश्यामाभिरामद्रुमं
पान्थश्रान्तिहरं सरः पथि हृतं दुर्भिक्षमप्यम्भसाम् ।
ये त्वेते भुवि चातका इति कदाप्यज्ञातभूमोदका-
स्ते गृणन्ति न चेदिहाम्बु किमतो दैवेन ते वञ्चिताः ॥

भूमिष्ठा अतिपावनीः सुरभिलाः स्वाद्वीरपः संत्यज-
न्याचत्यम्बुदमम्बु चातकगणो यत्तेन किं साध्यते ।
किं तस्मै द्विगुणं प्रवर्षति घनः किं वा तपः साध्यते
प्राग्जन्मन्यवितीर्णवारिकणिकः पापी स इत्यूह्यते ॥ ९० ॥

स्वादून्येव फलानि सन्ति सुरभीण्येव प्रसूनानि च
स्वान्तं चाप्युपकर्तुमर्हति जने साध्यं वनस्थेन किम् ।
भाग्यं ह्येतदतर्कितं वनतरोः पान्थो यदा तापव-
श्छायामस्य यदृच्छया फलवतीमध्यास्त गन्धोत्तराम् ॥

पान्थेषु व्ययितं फलं पथिषु यैर्नम्रैः सदा पादपै-
र्यैरप्युन्नतमौलिगोपितफलैः कोणे निलीय स्थितम् ।
दावेन ज्वलता द्वयेऽपि खलु ते निःशेषिताः सांप्रतं
पुण्यं पापमिति स्थितं द्वयमिदं तेषां द्वयानां पृथक् ॥

अध्वन्याः किल मूलगर्तमधुनाप्यापूरयन्त्यश्रुभि-
र्व्याक्रोशन्त्यधुना सबान्धवकुलाः सायं मुहूर्तं द्विजाः ।
इत्थं यावदिमानि बिभ्रति शुचं भूतान्यपि त्वत्कृते
तावत्त्वं न गतोऽसि पादप चिरं कीर्त्यात्मना वर्तसे ॥

जायन्ते विजने वने क्षितिरुहो यद्यप्यमी दुर्भगाः
सर्वे ते पटुभिस्तथापि न तथा बोढुं क्षमास्तुल्यवत् ।
आक्रान्तेष्वपि तेषु केषुचिदतिक्रूरक्रियैः श्वापदै-
र्गृह्यन्ते कतिचिद्यतः शमधनैर्ब्रह्मर्षिभिः पावनैः ॥ ६४ ॥

निद्रालस्यशरीरसादवमनाग्निद्वेषकासज्वर-
श्वासश्वेतिमहिक्किकाप्रभृतयो मासेषु मातुर्भुवाः ।
जातस्तत्क्षणमेव नश्यतु शतं वर्षाणि वा जीवतु
स्वर्गे वा पितरौ दधातु नरके वा पातयत्वङ्गजः ॥ ६५ ॥

निघ्नन्तोऽशनिभिस्तडिद्विलसितैश्चक्षुर्हरन्तो नृणां
विघ्नन्तश्च शिलाशतैः परिचिताः प्रायेण धाराधराः ।
वर्षन्तो निभृताश्चिरं च समये दृष्टाश्च केचिद्धना
वैरव्याजपरोपकारनिरतैर्जातस्तथा यशः ख्यापितम् ॥ ६६ ॥

नाम्भोर्गच्छसि गोचरं बहुविधान्मासानभस्ये पुनः
संघीभूय समेत्य वर्षसि निरुच्छ्वासं समन्तादपः ।
कालं कालमनुव्रजन्मितमिता शुश्रूषस्वपश्चेत्ततः
किं जीमूत तव प्रणश्यति कियत्प्राणन्स्वतः प्राणिनः ॥ ६७ ॥

भग्नं भित्तिभिरालयैर्निपतितं स्रोतोभिराप्लावितं
विध्वस्तं पशुभिश्च संवश इति क्रोशन्ति वृष्टे त्वया ।
त्वय्युद्गृह्णति वारि वारिद जना नश्यन्त्यवश्यं क्षणा-
त्कीर्तिं चिन्तय दुर्लभां न गणय क्षुद्रान्गुणान्मादृशाम् ॥

उत्पत्तिर्मलये समुद्रनिलये पन्था वृतो राक्षसै-
स्तत्रत्यानपि हन्त चन्दनतरूंश्छिन्दन्ति सांयात्रिकाः ।
वर्तन्ते सविधस्थिताश्च सुखिनः शाखोटमुख्या द्रुमा-
स्तन्मन्ये कृतिनस्तु ते तरुकुले ये नोपयोगक्षमाः ॥ ६९ ॥

गृह्णन्तां करिणः प्रसह्य विनिहन्यन्तां वराहा वृका
भल्लूकाश्च तरक्षवश्च पथिकाः सन्तु त्वया निर्भयाः ।
आखून्कङ्कखराञ्शशाननिमिषान्कीटान्पतङ्गानपि
ग्राहं ग्राहमहो कियत्प्रकटयस्योखेटके पाटवम् ॥ ७० ॥

यादोभिर्वडवाग्निना जलनिधेर्यावत्पयो गृह्यते
किं तावत्युपयुज्यते शततमोऽप्यंशः पयोद त्वया ।
सौजन्यं किमिति ब्रवीमि भवतः सर्वत्वमित्थं त्वज-
न्यातः कथापयसे पयोधिमपि तं सर्वोपयोगाक्षमम् ॥

मेघः कश्चिदचेतनः कियदपि स्वीकृत्य सिन्धोः पयः
कीर्तिं तस्य समुच्चिनोति कियतीं धर्मं कियच्छाश्वतम् ।
अस्माकं तपसां निधिस्त्रिभुवनख्यातश्च कुम्भोद्भवः
सर्वस्वं विनियुज्य तस्य किमिव श्रेयः समापादयत् ॥ ७२

यच्छैलेषु यदर्णवेषु यदपि ग्रामाटवीजाङ्गल-
प्रायासु क्षितिषु क्षिपन्ति बहुशस्तोयं वृथा तोयदाः ।
दृष्टिस्तत्र न दीयतां यदि गुणग्राही भवान्यत्पुन-
र्ग्रामेषूपवनेषु वा सकृदमी वर्षन्ति तद्गृह्यताम् ॥ ७३ ॥

ग्रामेष्वेव सुवृष्टयो विनयवत्स्वेव श्रियः पुष्कला
धीमत्स्वेव कलागमव्यसनिता गोष्वेव दुग्धस्थितिः ।
वाग्मिष्वेव विवक्षुतेति च जगत्प्रार्थ्यो व्यवस्थामिमां
किं वेधा विदधे पुरेति शृणुमो रामेऽपि राज्यस्थिते ॥

उन्मीलन्ति कियन्ति वा न कुसुमान्युष्णद्युतेरुद्गमे
तस्वे तावति बन्धुरित्यविसखीत्यादित्यकान्तेति च ।
कीर्तिं दत्तवतां त्रिलोकविदितामेवं कवीनामृणं
किं कृत्वेयमपाकरोतु जनुषां कोट्यापि नालीकिनी ॥ ७५

धिग्धं साधु न साध्विव प्लुतमिदं रे रे कथं विश्वसी-
त्याख्यातुं रणकौशलं बकमपि प्रोढाः स्थिता दूरतः ।
आक्रामन्रणमेदिनीमपि वहन्खड्गं विकोशं करे
वेत्ति स्वं च परं च यद्व्यवहितो त्रिक्रान्तिरेषैव नः ॥ ७६

अम्भोजेष्वतिकोमलेषु विहरन्नन्तर्जले संविश-
न्नज्ञातातपवातवर्षमनयत्कालं चिरं यः सुखम् ।
सोऽद्य प्रावृषि केतकीमधिवसन्भृङ्गः क्षतः कण्टकै-
राविद्धः करकोपलैरभिहतो वातैः कथं वर्तते ॥ ७७ ॥

ब्रूते स्वागतमीक्षते कुशममुं श्रुत्वा कथाः खिद्यते
पक्षाभ्यामसकृत्प्रमार्ष्टि रचयत्युच्चावचाश्चाशिषः ।
छिन्नप्रसवात्तरोरुपगते भृङ्गे क्षुधा ताम्यति
प्रश्नोति भ्रमरस्तु पूर्णजठरो नाहारवार्तामपि ॥ ७८ ॥

ये मुष्यन्ति सहासिकामपि बकेर्ज्ञात्वा न हंसाः स्वत-
स्तेष्वेको जरसा विलुप्तगमनस्त्यक्तः स्वकैः प्रावृषि ।
तानेवानुसरन्बकान्बहुतरं तच्चेष्टितानि स्तुवं-
स्तत्रास्ते सुहृदमिक्यरिकयदहो आर्तिं निजां निन्दति ॥

शुद्धिं स्वामनुचिन्त्य मीननिवहैः पूर्णेऽपि पद्माकरे
  स्वेनैवोपनतैर्मृणालवलयैर्जीवन्ति हंसाः सुखम् ।
ये श्वेते विमलास्ततोऽपि च बका ध्यानैकनिष्ठाः सदा
  निर्द्वन्द्वा निभृताश्च बिभ्रति तु ते यादोभिरेवोदरम् ॥ ८० ॥

यैर्जीवन्ति सितच्छदा न दुरितं कस्यापि यत्संग्रहे
  शोचन्ते न हि ते मृणालवलयाः कस्मै प्रभूता अमी ।
अप्यासायमुपोष्य मीनपृथुकैर्युक्त्या महत्यार्जितै-
  रेकद्वैरपि तृप्तिमेति परमां हिंसोपलब्धैर्बकः ॥ ८१ ॥

अस्पृश्योऽस्तु मलीमसोऽस्त्वनियताहारोऽस्त्वतोऽप्युत्कटै-
  र्दोषैरस्तु परःशतैः परिवृतः काकस्ततः का क्षतिः ।
भुङ्क्ते भोज्यमुपस्थितं समुपहूयैव स्वयं बान्धवा-
  न्यः सौहृद्बुधया विचिन्तय ततो धन्यश्च पुण्यश्च कः ॥

भूयास्ते विभुरस्तु तान्वयमिमे क्षुद्रा द्रुहन्तो वयं
  जातौ पक्षवताममी तु कलकण्ठाः कालकण्ठा वयम् ।
इत्युद्भावयसे कुहूमुखकलादुत्कर्षमेवात्मनः
  कण्ठे पातयिता कदा खलु भवान्काक स्वरं पञ्चमम् ॥

केनाध्यापितमाश्रितं क नु कदाधीतं क वावर्तितं
तद्विश्राम्यतु कुत्र जातमथ कैः पुष्टं तदालोच्यताम् ।
काले सोऽपि कुहूमुखो यदि जगत्कर्णामृतं कूजति
प्राग्जन्मार्जितभाग्यवैभवमिदं कः स्तोतुमीष्टे कविः ॥ ८४ ॥

कीटः कश्चन वृश्चिकः कियदयं प्राणी कियच्चेष्टते
को भारो हननेऽस्य जीवति स वा कालं कियन्तं पुनः ।
नाम्नोऽप्यस्य कियद्विभेति जनता दूरं कियद्धावते
किं ब्रूमो गरलस्य दुर्विषहतां पुच्छाग्रशूकस्पृशः ॥ ८५ ॥

किं चन्द्रो न पुरा बभूव किमिमे वृक्षाः पुरा नाभव-
न्किं सृष्टा अधुना पिका मधुकरा अद्योदपद्यन्त किम् ।
स्वाहंकारममुं प्रपञ्चमखिलं भोक्तुं यदा प्राणिनां
प्रासीदद्द्रुहिणस्तदा समुदभूदाश्चर्यचर्यो मधुः ॥ ८६ ॥

आयासानविचिन्तयन्नगणयँल्लाभं ततः किंचिद-
प्यम्भो मुञ्चति कीर्तिमात्रशरणो धाराधरः सर्वतः ।
तस्मात्तदुपयुज्य वर्धयतु वा दातुर्यशः शाश्वतं
मौढ्यादेतदुपेक्ष्य नाशयतु वा लोकः प्रमाणं ततः ॥ ८७ ॥

वृत्तिं वर्तयितुं निजां विषहरा गृह्णन्तु सर्पान्नरा
गृह्णन्तु क्षुधितास्तदेकविहिताहारा मयूराश्च वा ।
नाजिघ्रन्ति च ये कदापि नकुलास्ते हन्त किं कारणं
दृष्टं दृष्टमनुद्रवन्ति भुजगान्द्वेषा च विच्छिन्दते ॥ ८८ ॥

खादन्ति क्षुधितास्तृणानि तृषिता गृह्णन्त्यपो निर्झरे
सीदन्तो गिरिकंदरासु हरिणा येऽमी क्वचिच्छेरते ।
व्याधव्याघ्रदवानलप्रभृतयस्तेष्वेव संनाहिन-
स्तद्वा तिष्ठतु घातयन्ति मुनयोऽप्येतान्कथं चर्मणि ॥ ८९ ॥

घ्नन्त्येकत्र तरक्षवो मृगकुलं दावा दहन्त्यन्यतो
व्याधा वीतभयाः परत्र शतशो विध्यन्ति गृह्णन्ति च ।
किं त्वं वेत्सि कथामिमां मृगपते निद्रासि कोणे क्वचि-
द्दिष्ट्या चेदवबुध्यसे शमयसि क्षिप्रान्वृथा दन्तिनः ॥ ९०

दुर्वर्णोऽसि वनेचरोऽसि क इदं नेत्याह किं तु त्वतो
जानीषे न हिताहितं न खलु तज्जिज्ञाससे चान्यतः ।
बध्नन्ति निबन्धयन्ति निगडैस्त्वां ताडयन्त्यङ्कुशै-
रारोहन्ति च वारणेन्द्र मशकप्राया मनुष्या अपि ॥ ९१ ॥

अहह्निश्चतुरम्बुभिः स्नपयसि त्वं पुष्करावर्जितै-
र्भुङ्क्षे मेध्यतराणि भद्र तरुणान्यश्वत्थपत्राणि च ।
पुण्यारण्यचरोऽसि न प्रविशसि ग्रामं सकृत्कुञ्जर
ज्ञानं चेत्कियदप्युदेति न समा ब्रह्मर्षयोऽपि त्वया ॥ ९२

हन्यन्ते कति जन्तवो वनचरैर्नित्यं कति श्वापदै-
र्गृह्यन्ते कति कूटयन्त्ररचनैः क्षोणीभृतां प्रीतये ।
एतावत्यपि विप्लवे न भजसे कस्यापि दृग्गोचरं
स्वच्छन्दश्च सृगाल खेलसि पुनस्तुल्यं वनग्रामयोः ॥

अस्ति स्वर्णमयोऽद्रिरस्ति विषयः क्षुत्तृड्जरावर्जितः
सन्ति क्षीरघृताकरा जलधयः सन्ति द्रुमाः कामदाः ।
किं नश्चरितादद्भुतश्रवणतः साध्यं क्षुधा ताम्यतां
दृष्टं यत्सविधे विधेहि सुमते तत्रैव सर्वं श्रमम् ॥ ९४ ॥

अस्त्यत्रैव किलार्णवे तदमृतं तत्रैव हालाहलः
सन्त्यस्मिन्मलये पटीरतरवस्तत्रैव वाताशनाः ।
यद्वद्वस्त्वभिजातमस्ति सविधे तत्तद्दुरापं नृणां
प्रागव्यं रसनाञ्चले करतले भाले च वेधा न्यधात् ॥

तावद्वर्धितमेधितव्यमवनौ यावन्महद्भिर्द्रुमै-
श्छायाभिः कुसुमैः फलैश्च पथिकाः शक्त्या समाराधिताः
कालोऽयं मम जीर्यतः पतितुमित्यास्ते तरोराशये
पान्थानां च पतत्रिणां च हृदये जातोऽयमस्मिन्क्षणे ॥

दृष्टिप्राणविषान्फणाधरपतीनष्टापि दृष्ट्या स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः ।
मार्जारान्नकुलांश्च किं खगपतिः साह्ये वृणोत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ॥ ९७

अश्वन्यान्कति रुन्धते कति दृढान्भिन्दन्ति तोयाकरा-
न्केदारान्कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान् ।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमा
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥

का द्यौः किं बलिसद्म का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत्कदाचिदपि किं ते सर्वसंदर्शिनः ।
भ्राम्यन्तः प्रलपन्तु नाम विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत्किं नाम संभाव्यते ॥ ९९ ॥

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः
प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वंसहे ।
ये त्वेते बिभृमो वयं भुवमिति स्वं स्थापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥ १०० ।

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये ।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किंचित्परं
न स्यात्स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥ १०

इति श्रीनीलकण्ठदीक्षितविरचितं
अन्यापदेशशतकं संपूर्णम् ॥

## .॥ श्रीमद्वाल्मीकिरामायणम ॥

### 1. The Valmiki Ramayana

**Complete in 8 Volumes** Rs. 10 0

*Sundarakanda (alone)* „ 1 8

A series of handy volumes of the standard works in Sanskrit literature. Each volume is well printed and attractively bound and would easily go into one's pocket. The readings adopted are purely South Indian and each half of a sloka is given in one line. Several illustrations adorn the volumes.

*Vol. I. Balakanda*
*Vols. II & III. Ayodhyakanda Parts I & II.*
*„ IV. Aranyakanda.*
*„ V. Kishkindhakanda.*
*„ VI. Sundarakanda.*
*Vols. VII & VIII. Yuddhakanda Parts I & II.*

| | |
|---|---|
| **Each Volume separately** | 1 8 |
| पट्टाभिषेकसर्गः | 0 2 |
| परामायणम् | 0 2 |

कुतम DHARMAKUTAM A series of dissertations on the Ramayana of Valmiki by Tryambakarayamakhi who flourished in the 17th century at the Court of King Ekkoji of Tanjore.

| | | | |
|---|---|---|---|
| Do. Vol I. BALAKANDA | | | 2 8 |
| Do. Vol. II AYODHYAKANDA. Part I | | | 2 8 |
| Do. Vol. III | Do | Part II | 2 8 |
| Do. SUNDARAKANDA | | | 4 0 |

त्रम् BRAHMASUTRAS by Sri Badarayana Maharshi. Text alone useful for parayana 0 5